प्रमाणम्—'गौर्भूमिरचलाः सर्वे कर्तारोत्र पयांसि च। ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च ॥ वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः ॥' इति। एतेन वत्सस्य मातुः प्रेमास्पदत्वादस्य सारग्राहित्वं गम्यते। तथा चास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्तमिति भावः। अत्र हिमवद्वर्णनस्य प्रकृतत्वात्तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रियारूपसमानधर्मसंबन्धादौपम्यस्य गम्यत्वात्केवलप्राकरणिकविषयस्तुल्ययोगितानामालंकारः। तदुक्तम्—'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' न चात्र रूपकपरिणामाद्यलंकारशङ्का कार्या तेषामारोपहेतुत्वात्। हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति ॥

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छ्वित्रिणः इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह—

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।**
**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥**

3. In the case of whom, the origin of endless gems, snow did not become the destroyer of grandeur; for a single defect is drowned in an assembly of virtues, like the spot of the Moon in (her) rays.

**अनन्तेति** ॥ प्रभवत्यस्मादिति प्रभवः कारणम्। अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य यस्य हिमाद्रेर्हिमम्। कर्तृ। सुभगस्य भावः सौभाग्यम्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। तद्विलुम्पतीति सौभाग्यविलोपि सौंदर्यविघातकं न जातं नाभूत्। तथाहि। एको दोषो गुणसंनिपात इन्दोः किरणेष्वङ्क इव निमज्जति। अन्तर्लीयत इत्यर्थः। नहि स्वल्पो दोषोऽमितगुणाभिभावक एव किंतु कश्चिदिन्दुकलङ्कादिवद्गुणैःरभिभूयते। अन्यथा सर्वरम्यवस्तुहानिप्रसङ्गादिति भावः। अत्रोपमानुप्राणितोऽर्थान्तरन्यासालंकारः। तल्लक्षणं तु—'ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥' इति दण्डी ॥

**यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति।**
**बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ ४ ॥**

4. Who through (his) peaks, possesses an abundance of minerals furnishing amorous decoration for the divine ladies, with its colours shared by the fragments of clouds *(balahaka)*, like an untimely twilight.

**यश्चेति** ॥ किंचेति चकारार्थः। यो हिमाद्रिरप्सरसां विभ्रममण्डनानि विलासालंकरणानि। अथवा विभ्रमो विपरीतन्यासः। 'विभ्रमस्त्वरयाऽकाले भूषास्थान-

विपर्यये ' इति दशरूपकात् । तेन मण्डनानि तेषां संपादयित्रीम् । एतद्धातुरागदर्शिन्योऽप्सरसः संध्याभ्रमेण प्रसाधनाय त्वरयन्त इति भावः। तथात्वे भ्रान्तिमदलंकारो व्यज्यते । ' कर्तृकर्मणोः कृति ' इति कर्मणि षष्ठी । वारीणां वाहका बलाहकाः । पृषोदरादित्वात्साधुः । तेषां छेदेषु खण्डेषु विभक्तः संक्रमितो रागो यया ताम् । एतेनाद्रेरभ्रंकषत्वं गम्यते । इदं विशेषणद्वयं संध्यायामपि योज्यम् । धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान् । नित्ययोगे मतुप् । तस्य भावो धातुमत्ता ताम् । धातुयोगित्वमिति संबन्धोऽपि वाच्यार्थः । 'समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेन' इति वचनात् । लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः । अकालसंध्यामिवानियतकालप्राप्तसंध्यामिव शिखरैर्बिभर्ति धत्ते । अत्र संध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा ॥

**आमेखलं संचरतां घनानां छायामधःसानुगतां[1] निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥**

5. Whose summits bearing sunlight, the Siddhas (semi-divine beings) resort to, being afflicted by the showers, after having enjoyed the shadow falling on the summits underneath, of the clouds hovering upto (his) slopes.

**आमेखलमिति** ॥ सिद्धा अणिमादिसिद्धा देवयोनिविशेषाश्च । ' पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ' इत्यमरः । आ मेखलाभ्य आमेखलं नितम्बपर्यन्तम् । ' मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः ' इति विश्वः । ' आङ् मर्यादाभिविध्योः ' इत्यव्ययीभावः । संचरतां घनानां मेघानामधः सानूनि मेघमण्डलादधस्तटानि गतां प्राप्ताम् । ' द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ' इति समासः । छायामनातपम् । ' छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ' इत्यमरः । निषेव्य वृष्टिभिरुद्वेजिताः क्लेशिताः सन्तः । ' उद्वेगस्तिमिते क्लेशे भये मन्थरगामिनि ' इति शब्दार्णवः । यस्य हिमाद्रेरातपवन्ति सातपानि शृङ्गाण्याश्रयन्ते । आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्यौन्नत्यमिति भावः ।

**पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति[2] मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ६ ॥**

6. On whom (where) even without seeing the foot-prints with blood washed away by snow-streams, do the hunters recognise the trail *(marga)* of the lions that have killed elephants, by means of the pearls fallen from the cavities in (their) claws.

---

१ छायामिषे सानुगताम्. २ विन्दन्ति.

**पदमिति** ॥ यस्मिन्नद्रौ किरातास्तुषारस्रुतिभिर्हिमनिस्यन्दैर्धौतं क्षालितं रक्तं शोणितं यस्य तत्तथोक्तम् । अतो दुर्ग्रहमिति भावः । हता द्विपा गजा यैस्तेषां हतद्विपानां केसरिणां सिंहानां पदं पादप्रक्षेपस्थानमदृष्ट्वापि नखरन्ध्रैर्नखद्रोणिभिर्मुक्तैर्मुक्ताफलैर्मार्गं विदन्ति जानन्ति । अत्र व्याधा सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः । 'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥' इति ॥

**न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥**

7. Where the birch barks with letters written (on them), by mineral fluids, red like the spots on elephants, serve the purpose of the beautiful Vidyadhara ladies, in writing love letters *(ananga-lekha)*.

**न्यस्ताक्षरेति** ॥ यत्र हिमाद्रौ धातुरसेन सिन्दूरादिद्रवेण । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । न्यस्ताक्षरा लिखितवर्णा अत एव कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः । 'पद्मकं बिन्दुजालकम्' इत्यमरः । त इव शोणा रक्तवर्णाः । लिखितभागेष्विति शेषः । भूर्जत्वचो भूर्जपत्रवल्कलानि । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका अपि' इति यादवः । विद्याधरसुन्दरीणाम् । लिख्यन्ते येषु ते लेखाः पत्रिकाः । अनङ्गस्य लेखास्तेषां क्रियया । कामव्यञ्जकलेखकरणेनेत्यर्थः । उपयोगमुपकारं व्रजन्ति । दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥

**यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।**
**उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥**

8. Who, filling the hollow parts of the bamboos *(kichaka)* with the wind rising from (his) mouth in the form of the valley, desires, as it were, to acquire the state of the instructor of key-notes to the Kinnaras about to sing in a high pitch.

**य इति** ॥ यो हिमाद्रिः दरी गुहा सैव मुखं तस्मादुत्थेनोत्पन्नेन । 'आतश्चोपसर्गे' इति कप्रत्ययः । समीरणेन वायुना कीचका वेणुविशेषाः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । तेषां रन्ध्रभागाञ्छिद्रप्रदेशान्पूरयन्धमयन् । वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयतीति प्रसिद्धिः । उद्गास्यतां देवयोनित्वादुच्चैर्गान्धारग्रामेण गानं करिष्यताम् । उक्तं च नारदेन— 'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥' इति । किंनराणां देवगायकानां

---

१ स्थान.

तानप्रदायित्वम् । तानो नाम स्वरान्तरप्रवर्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः । 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः । 'गाता यं यं स्वरं गच्छेत्तं तं वंशेऽवतानयेत्' इति भरतः । तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वमुपगन्तुमिच्छतीवेत्युत्प्रेक्षा । सा च दरीमुखोत्थेनेत्येकदेशविवर्तिरूपकोज्जीविता । मुखसाध्यत्वात्तानप्रदायित्वस्य । यत्रावयवरूपणादवयवनिरूपणं गम्यते तदेकदेशविवर्ति रूपकम् । गम्यते चात्रावयविनः पुंसो रूपणं यच्छब्दैर्निर्दिष्टे हिमाद्रावित्यलं बहुना ॥

**कपोलकण्डूः[1] करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।**
**यत्र स्रुतक्षीरतया प्रसूतः[2] सानूनि गन्धः[3] सुरभीकरोति ॥ ९ ॥**

9. Where the perfume arisen from the milk-emitting nature of the pine trees, rubbed against by elephants for allaying the itch on (their) temples, renders the summits fragrant.

**कपोलेति** ॥ यत्र हिमाद्रौ करिभिर्गजैः । कपोलकण्डूर्गण्डस्थलकण्डूर्विनेतुमपनेतुं विघट्टितानां घर्षितानां सरलद्रुमाणां संबन्धि स्रुतानि करिकपोलघर्षणात्क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता तया हेतुना प्रसूत उत्पन्नो गन्धः सानूनि सुरभीकरोति । एतेनास्य गजाकरत्वं गम्यते । तथा च गजायुर्वेदे—'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः' इति ॥

**वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

10. Where, at night, with (their) lustre transferred to the interior of the abodes in the form of caves, the plants serve the foresters accompanied by their wives, as lamps at sexual enjoyment, not requiring to be filled with oil.

**वनेचराणामिति** ॥ यत्र हिमाद्रौ रजन्यां दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासां ता ओषधयस्तृणज्योतींषि । 'अग्नावोषधीषु च तेजो निधाय रविरस्तं याति' इत्यागमः । वनितानां सखायो वनितासखाः । 'राजहःसखिभ्यष्टच्' । तेषाम् । रममाणानामित्यर्थः । वने चरन्तीति वनेचराः किराताः । 'चरेष्टः' इति टप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तेषां वनेचराणाम् । अतैलपूराः अनपेक्षिततैलसेका इत्यर्थः । सुरते सुरतोपयोगित्वात्परिणामालंकारः । तदुक्तम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः ॥

---

१ कण्डूम्. २. समीरः. ३ गन्धैः

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

11. Where distressed by (their) heavy hips and breasts, the Kinnara ladies do not change (their) slow gait, in spite of the path (being covered) with frozen frost, torturing parts of fingers and heels.

**उद्वेजयतीति** ॥ यत्र हिमाद्रौ । शिलीभूतं घनीभूतं हिमं यत्र तस्मिन् । अत एवाङ्गुलीनां पार्ष्णीनां च भागान्प्रदेशानुद्वेजयत्यतिशैत्यात्क्लेशयत्यपि मार्गे । श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् । दुर्वहेण दुर्धरेण श्रोणिपयोधरेणार्ताः पीडिताः । आङ्पूर्वा-दृच्छतेः क्तः । 'उपसर्गादृति धातौ' इति वृद्धिः । अश्वानां मुखानीव मुखानि यासां ता अश्वमुख्यः किंनरस्त्रियः । उष्ट्रमुखवत्समासः । 'स्यात्किन्नरः किंपुरुषस्तुरंगवदनो मयुः' इत्यमरः । मन्दां मन्थरां गतिं न भिन्दन्ति । न त्यजन्तीत्यर्थः । पादपीडाकरेऽप्यति-भारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यत इति भावः ॥

**दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव[1] ॥ १२ ॥**

12. Who protects from the sun darkness concealed in (his) caves, like an owl (or, as if afraid in the day); indeed the high-minded (lit. lofty-headed) have affection even for the mean, come for shelter, as for the good.

**दिवाकरादिति** ॥ यो हिमाद्रिर्दिवा दिवसे भीतं भयाविष्टमिव । उलूकमिवेति च ध्वनिः । गुहासु लीनमन्धकारं ध्वान्तम् । दिवा दिनं करोतीति दिवाकरस्तस्माद्दिवाक-रात् । 'दिवाविभानिशाप्रभाभास्कर—' इत्यादिना टप्रत्ययः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी । रक्षति त्रायते । ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्क्याह--क्षुद्र इति । उच्चैःशिरसामुन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचेऽपि सति सज्जन इव नूनं ममत्वं ममायमित्यभिमानः । अस्तीति शेषः । ममशब्दात्त्वप्रत्ययः । अर्थान्तरन्यासोऽलंकारः ॥

**लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्र[2]मरीचिगौरैः ।**
**यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति वालव्यजनैश्चमर्यः ॥ १३ ॥**

13. In whose case, here and there, the Chamari deer make the title viz. the king of mountains significant (full of meaning), by means of chowries (*balavyajana* — flyflappers) white like the rays of the Moon and whose beauty is spread by the wagging of tails.

---

१ अतीव. २ चान्द्र.

**लाङ्गूलेति** ॥ चमर्यो मृगीविशेषा इतस्ततो लाङ्गूलानि वालधयः। 'पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः। तेषां विक्षेपैर्विधूननैर्विसर्पिण्यो विसृमराः शोभाः कान्तयो येषां तैश्चन्द्रमरीचिरिव गौरैः शुभैः। 'गौरः करीरे सिद्धार्थे शुक्ले पीते-रुणेऽपि' च इति यादवः। 'उपमानानि सामान्यवचनैः' इति समासः। वालव्यजनै-श्चामरैर्यस्य हिमाद्रेर्गिरिराजशब्दं गिरिराज इति संज्ञामर्थयुक्तमभिधेयवन्तं कुर्वन्ति। राजानो हि छत्रचामरादिविचिह्निता इति भावः॥

**यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम्।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥**

14. Where the clouds with (their) roundish forms *(bimba)* hanging in the doors of the abodes in the form of caves casually become veils for the Kinnara ladies blushing on account of the removal of the silken garment.

**यत्रेति** ॥ यत्र हिमाद्रौ। अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किंपुरुषाङ्ग-नानां किंनरस्त्रीणां यदृच्छया दैवगत्या दरीगृहद्वारेषु विलम्बिबिम्बा लम्बमानमण्डला जलदास्तिरस्करिण्यो जवनिका भवन्ति। 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः। 'तिरसोऽन्यतरस्याम्' इति सत्वम्। अत्र जलदेष्वारोप्यमाणस्य तिरस्क-रिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालंकारः।

**भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥**

15. Whose wind, bearer of particles from the stream of the Ganges, shaking the pine trees frequently (and) dishevel-ling the feathers of the peacock, is enjoyed by the hunters that have searched for game.

**भागीरथीति** ॥ भागीरथीनिर्झरसीकराणां गङ्गाप्रवाहपाथःकणानाम्। कर्मणि षष्ठी। वोढा प्रापकः। वहेस्तृच्। मुहुः पुनःपुनः सद्यो वा। 'पौनःपुन्ये भृशार्थे च सद्यो वा स्यान्मुहुःपदम्' इति वैजयन्ती। कम्पिता देवदारवो येन स तथोक्तः। भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः। क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि। यस्य हिमाद्रेर्वायुः। अन्विष्टमृगैर्मार्गितमृगैः श्रान्तैरिति भावः। 'अन्विष्टं मार्गितं मृगितम्' इत्यमरः। किरातैरासेव्यते॥

**सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः।**
**पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥**

---

१ द्वारि.

16. Whose sun-lotuses, growing in the lakes on the tops, remaining after being gathered by the hands of the seven sages, the Sun revolving underneath, causes to bloom, with rays directed (lit. having faces) upwards.

सप्तर्षीति ॥ सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । तेषां हस्तैरवचितेभ्यो लूनेभ्योऽवशेषाण्यवशिष्टानि । 'शेषोऽप्रधानसंतापे त्रिष्वन्यत्रोपयुज्यते' इति केशवः । कर्मण्यण्प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । यस्य हिमाद्रेः रोहन्तीति रुहाणि । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । अग्र उपरि यानि सरांसि तेषु रुहाणि पद्मान्यधःपारिवर्तमानो भ्रमन्विवस्वान्सूर्य ऊर्ध्वमुखैर्मयूखैः प्रबोधयति विकासयति । न कदाचिदधोमुखैः । अतिमार्तण्डमण्डलत्वादग्रभूमेरिति भावः । सप्तर्षिमण्डलं ध्रुवादप्यूर्ध्वमिति ज्यौतिषिकाः । अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥

**यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥**

17. Whose overlordship of the mountains the Prajapati himself established, designing (for him-*Himalaya)* a portion in the sacrifices, having noted his being the birth-place of the material for sacrifices *(yajnanga)* and (his) strength capable of supporting the earth.

**यज्ञाङ्गेति**॥ यस्य हिमाद्रेर्यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवस्तस्य भावस्तत्त्वम् । 'यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः' इति विष्णुपुराणात् । धरित्रीधरणक्षमं भूभारधरणयोग्यं सारं बलं च । 'सारो बले स्थिरांशे च' इत्यमरः । अवेक्ष्य ज्ञात्वा प्रजापतिः स्वयमेव कल्पितो यज्ञभागो यस्मिंस्तत्तथोक्तम् । 'सोमस्य राज्ञः कुरङ्गी इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती' इति श्रुतेरिति भावः । शैलानामाधिपत्यमधिपत्वम् । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्ययः । अन्वतिष्ठत् ददाति स्मेत्यर्थः । उक्तं च ब्रह्माण्डपुराणे—'शैलानां हिमवन्तं च नदीनां चैव सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः' इति ॥

**स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥ १८ ॥**

18. That friend of Meru, well-versed in duty, married with due rites for the propagation of the race, Mena, the mind-born daughter of the *pitris*, worthy of respect even from the sages and suitable to himself.

**स इति** ॥ मेरोः सखा मेरुसखः । बन्धुसंपन्न इति भावः । स्थितिज्ञो मर्यादाभिज्ञः । अनेन श्रुतसंपत्तिः सूच्यते । स हिमवान्पितॄणां मानसीं मनःसंकल्पजन्यां

मुनीनामपि माननीयाम् । योगिब्रह्मवादिभ्यां पूज्यामित्यर्थः । उक्तं च विष्णुपुराणे—'तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ॥' इति । आत्मानुरूपां कुलशीलसौन्दर्यादिभिः सदृशीं मेनां मेनकादेवीति नामवतीं कन्यां कुलस्य स्थितये प्रतिष्ठायै विधिना यथाशास्त्रेणोपयेमे परिणीतवान् । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् । 'तेषां तु मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥' इति ब्रह्माण्डपुराणात् ॥

**कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।**
**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥**

19. Now, in course of time, while they (two) indulged in sexual intercourse appropriate to their beauty, conception occurred in the case of the wife of the king of mountains, possessing charming youth.

**कालक्रमेणेति** ॥ अथ कालक्रमेण । गच्छता कालेनेत्यर्थः । तयोर्मेनकाहिमवतोः स्वरूपयोग्ये सौन्दर्यानुगुणे । यद्वा रूप्यते निश्चीयतेऽनेनेति रूपं ज्ञानं तद्योग्ये । शास्त्रानुसारिणीत्यर्थः । सुरतप्रसङ्गे सुरतकर्मणि प्रवृत्ते सति मनोरमं यौवनमुद्वहन्त्या भूधरराजपत्न्या मेनकाया गर्भोऽभवत् ॥

**असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।**
**क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥**

20. She gave birth to Mainaka, fit to be enjoyed by the Naga ladies, befriended of the ocean, not acquainted with the pains of injuries by the thunderbolt, in spite of Vritrashatru (Indra), clipper of wings (of mountains), being enraged.

असूतेति ॥ सा मेना नागवधूपभोग्यम् । नागकन्यापरिणेतारमित्यर्थः । अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम् । सख्यमूलं सूचयति—पक्षच्छिदि पक्षच्छेत्तरि । 'सत्सूद्विष-' इत्यादिना क्विप्प्रत्ययः । वृत्रशत्रौ क्रुद्धे कुपिते सत्यपि कुलिशक्षतानां वज्रप्रहाराणाम् । संबन्धसामान्ये षष्ठी । जानातीति ज्ञः । 'इगुपधज्ञा-' इति कप्रत्ययः । वेदनानां ज्ञः । अथवा वेदना जानातीति वेदनाज्ञः । 'आतोनुपसर्गे कः' इति कप्रत्ययः । 'उपपदमतिङ्' इति समासः । स न भवतीत्यवेदनाज्ञस्तम् । कुलिशक्षतवेदनानभिज्ञमित्यर्थः । सापेक्षत्वेपि गमकत्वात्समासः । पक्षच्छेदोद्यतशक्रत्राणाय शरणागमनमनयोः सख्यमूलमिति भावः । मैनाकं पुत्रमसूत । सर्वपर्वतपक्षच्छेदेप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः । तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम् । 'पिता न ज्ञायते यस्या भ्राता यदि न विद्यते । नोपयच्छेत्तु तां कन्यां धर्मलोपभयात्सुधीः ॥' इत्यभ्रातृककन्यापरिणयनिषेधात्प्रकृते पार्वती भ्रातृमत्येवेति सूचनार्थं मैनाकपर्वतमिति तात्पर्यार्थः ॥

**अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।**
**सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥**

21. Then virtuous Sati, the daughter of Daksha, formerly wife of Shiva, who discarded (her) body through Yoga (concentration), instigated by the insult from her father, repaired to that wife of the mountain (Menaka) for birth.

**अथेति** ॥ अथ मैनाकजननानन्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्वपत्नी पूर्वभार्या सती पतिव्रता । 'सती साध्वी पतिव्रता' इत्यमरः । सती नाम देवी । पितुर्दक्षस्य । कर्तरि षष्ठी । अवमानेन स्वभर्त्रवज्ञया प्रयुक्ता प्रेरिता योगेन योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती । जन्मने पुनरुद्भवाय तां शैलवधूं मेनकां प्रपेदे । अत्र पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्रवज्ञामसहमाना पितरं प्रसूं चोपेक्ष्य मत्कर्तव्यकार्यं त्वज्जामातैव करिष्यतीति निर्धार्य देवकार्याणि साधयितुं च योगाग्निना स्वशरीरं ददाहेति पुरावृत्तकथानुसंधेया ॥

**सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन संपत् ॥ २२ ॥**

22. That blessed one was begotten in her (Mena) who was practising penance, by the lord of mountains, like prosperity (created) by the quality of perseverence, in statesmanship, unfailing through proper application.

**सेति** ॥ भव्या कल्याणी सा सती भूधराणामधिपेन हिमवता समाधिमत्यां नियमवत्यां तस्यां मेनकायां सम्यक्प्रयोगात्साध्वाचरणाद्धेतोरपरिक्षतायामभ्रष्टायां नीतावुत्साहगुणेनोत्साहशक्त्या कर्त्रा । संपदिवोदपाद्युत्पादिता । उत्पद्यतेर्ण्यन्तात्कर्मणि लुङ् । 'चिण्भावकर्मणोः' इति च्चिण्प्रत्ययः । 'चिणो लुक्' इति तस्य लुक् ॥

**प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।**
**शरीरिणां स्थावरजंगमानां सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥**

23. With the quarters cleared, with wind freed from dust (and) with showers of flowers following the blowing of conches, did the day of her birth conduce to the happiness of the moveable and immoveable (animate and animate objects) bodies.

**प्रसन्नेति** ॥ प्रसन्ना निर्मला दिशो यस्मिंस्तत्प्रसन्नदिक् । पांसुविविक्ता रजोरहिता वाता यस्मिंस्तत्तथोक्तम् । शङ्खस्य स्वनात्स्वनस्य वानन्तरं पुष्पवृष्टिर्यस्मिंस्तत्तथोक्तं तस्याः

---

१ अपमानेन. २ तूर्य.

पार्वत्या जन्मदिनम् । स्थावराः स्थितिशीलाः शैलवृक्षादयः । ' स्थेशभासपिसकसो वरच् ' इति वरच्प्रत्ययः । जंगम्यन्ते भृशं गच्छन्तीति जंगमा देवतिर्यङ्मनुष्यादयः । स्थावराश्च जंगमाश्च तेषां द्वयानामपि शरीरिणां सुखायानन्दाय बभूव ॥

**तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।**
**विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥**

24. The mother shone very well on account of that daughter having a bright halo of lustre, like the Vidura land by the shoot of jewels torn out by the thunder of the new clouds.

**तयेति** ॥ स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री । ' स्वरतिसूतिसूयतिधूञूदितो वा ' इतीडागमः । विदूरस्याद्रेः प्रान्तभूमिर्विदूरभूमिः । ' अविदूरं विदूरस्य गिरेरुत्तुङ्गरोधसः काकतालीयसीमान्ते मणीनामाकरो भवेत् ॥' इति बुद्धः । नवमेघशब्दादुद्भिन्नया रत्नशलाकया रत्नाङ्कुरेणेव सुतरां चकासे रराज ॥

**दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।**
**पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥२५॥**

25. Being born (risen) (again), she, like the crescent of the Moon, waxing day by day, developed beautiful limbs, like the other digits concealed in moonlight.

**दिन इति** ॥ लब्ध उदयो यया सा लब्धोदया । उत्पन्नेत्यर्थः अभ्युदितेत्यन्यत्र । दिने दिने प्रतिदिनम् । ' नित्यवीप्सयोः ' इति वीप्सायां द्विरुक्तिः । परिवर्धमाना । उभयत्र समानमेतत् । सा बाला । चन्द्रमस इयं चान्द्रमसी लेखेव लावण्यमयान्कान्तिविशेषप्रचुरान् । ' मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ ' इति भूपालः । विशेषानवयवान् । ' विशेषोऽवयवे व्यक्तौ ' इत्युत्पलमालायाम् । ज्योत्स्नायामन्तर्धानं येषां तानि ज्योत्स्नान्तराणि ज्योत्स्नयान्तर्हितानि । तन्मयानीति यावत् । अन्याः कलाः कलान्तराणीव । सुप्सुपेति समासः । ' स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् ' इति शाश्वतः । पुपोषोपचितवती । इयं वाक्योपमेत्याह दण्डी । तल्लक्षणं तु– वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात्सा तु वाक्योपमा द्विधा ॥ ' इति ॥

**तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।**
**उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥२६॥**

---

१ धरित्री. २ वैदूर्यभूमिः. ३ नादात्. ४ तपसे.

26. Relatives called her, dear to (her) kinsmen, as Parvati (i.e.) by a name derived from the ancestors; afterwards that girl with a handsome face passed by the name Uma, being forbidden by her mother from penance, with the words, "*U ma* (Oh! Don't practise penance)".

**तामिति** ॥ बन्धुप्रियां तां बालां बन्धुजनः पित्रादिः । अभिजनादागतेनाभिजनेन । पित्रादिपूर्वसंबन्धोपाधिकेनेत्यर्थः । 'अभिजनाः पूर्वबान्धवाः' इति काशिका । नाम्ना । पर्वतस्यापत्यं स्त्री पार्वती । 'तस्यापत्यम्' इत्यणप्रत्ययः । इति जुहावाहूतवान् । ह्वयतेर्लिटि रूपम् । पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः । पश्चादभिजननामप्रवृत्त्यनन्तरं मात्रा जनन्या । 'उ इति संबोधने । 'उ इति वितर्कसंबोधनपादपूरणेषु' इति गणव्याख्याने । माशब्दो निषेधे । उ हे वत्से, मा मा कुर्वित्येवंरूपेण । तपसस्तपश्चर्यायाः । 'वारणार्थानामीप्सितः' इत्यपादानत्वात्पञ्चमी । निषिद्धा निवारिता सती सुमुखी सा बालोमेत्याख्यां नामधेयमुमाख्यां जगाम ॥

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा[1] ॥२७॥**

27. The eyes of the mountain, though (he) possessed children, were not content in (looking) at that child; for in spring (though) having infiinite flowers, the row of bees has a special attachment to the mango-tree.

**महीभृत इति** ॥ पुत्राश्च दुहितरश्च पुत्राः । 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः । तेऽस्य सन्तीति पुत्रवान् । भूमार्थे मतुप् । तस्य पुत्रवतोऽपि । बह्वपत्यस्यापीत्यर्थः । महीभृतो हिमाद्रेर्दृष्टिश्चक्षुस्तस्मिन्नपत्ये तोके । 'अपत्यं तोकं तयोः समे' इत्यमरः । तस्यां पार्वत्यामित्यर्थः । तृप्तिं न जगाम । तथा हि अनन्तपुष्पस्य नानाविधकुसुमस्यापि मधोर्वसन्तस्य संबन्धिनी द्विरेफमाला भृङ्गपङ्क्तिश्चूतस्य विकारे चूते चूतकुसुमे । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति विकारार्थोत्पन्नस्याणप्रत्ययस्य लुक्प्रकरणे 'पुष्पमूलेषु बहुलम्' इति पठनाल्लुक् । सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता । अत्यन्तासक्तेत्यर्थः ॥

**प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।**
**संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ २८ ॥**

28. He was purified and adorned by her, as a lamp by the flame great in (due to) lustre, the way to heaven—by the Ganges, (and) the learned—by grammatically correct speech.

---

[1] संघा; संज्ञा.

**प्रभेति** ॥ प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव । शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः । त्रयो मार्गा यस्यास्तया त्रिमार्गया मन्दाकिन्या । तृतीया द्यौर्लोक इति त्रिदिवः । स्वर्गः । वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम् । 'दीव्यपृषोदरादित्वाद्दिव्शब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेर्घञर्थे कविधानम् । 'दीव्यन्त्यत्र जना इति दिव' इति क्षीरस्वामी । तस्य मार्ग इव । संस्कारो व्याकरणजन्या शुद्धिस्तद्वत्या गिरा वाचा । 'भद्रैषां लक्ष्मीर्निहिताधि वाचि' इति श्रुतेरिति भावः । मनस ईषा मनीषा सास्यास्तीति मनीषी विद्वानिव । शकन्ध्वादित्वात्साधुः । तया पार्वत्या स हिमवान्पूतः शोधितश्च विभूषितश्च । अत्र शिखागिरोरविशिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः । इयं मालोपमा ॥

**मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।**
**रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥**

29. In childhood did she, standing in the midst of friends, play frequently with altars (heaps) of the sand of the Ganges, with balls and with dolls, as if experiencing the pleasures of sport.

**मन्दाकिनीति** ॥ सा पार्वती बाल्ये वयसि क्रीडानां रसः स्वादः । रुचिरिति यावत् । तं क्रीडारसम् । 'रसो गन्धे रसः स्वादे' इति विश्वः । **निर्विशतीव भुञ्जानेव** । 'निर्वेशो भृतिभोगयोः' इति विश्वः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । सखीनां मध्यगता सती मन्दाकिन्याः सैकतेषु पुलिनेषु वेदिकाभिः कन्दुकैः । क्रियया निर्वृत्तैः कृत्रिमैः । 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययः । 'क्त्रेर्मम्नित्यम्' इति मबागमश्च । पुत्रकैः पाञ्चालिकाभिः । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । 'संज्ञायां कन्' इति कन्प्रत्ययः । मुहुः पुनः पुना रेमे ॥

**तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः ।**
**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥**

30. Like rows of swans (going) to the Ganges in autumn, (and) (their) own lustre (going) to the efficacious plants at night, the learning of her former birth approached her who had a firm grasp, at the time of instruction.

**तामिति** ॥ स्थिरः स्थेयानुपदेशः प्राग्भवीयो यस्यास्तादृशीम् । मेधाविनीमित्यर्थः । तां पार्वतीमुपदेशकाले प्राक्तनजन्मविद्याः । पूर्वजन्माभ्यस्तविद्या इत्यर्थः । शरदि गङ्गां हंसमाला इव नक्तं रात्रौ महौषधिं तृणविशेषमात्मभासः स्वदीप्तय वइ प्रपेदिरे । उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥

---

१ महौषधीं.

**असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥ ३१ ॥**

31. Then after childhood, she reached the prime of youth, an unartificial decoration of the slender body, an instrumental cause of intoxication — not known as wine, a weapon of Cupid—without flowers.

**असंभृतमिति** ॥ अथ सा पार्वती । अङ्गयष्टेरसंभृतमयत्नसिद्धं मण्डनं प्रसाधनमनासवाख्यमासवाख्यारहितं मदस्य करणं साधनं कामस्य पुष्पव्यतिरिक्तमस्त्रमस्त्रभूतं बाल्याच्छैशवात्परमनन्तरभावि वयो यौवनं प्रपेदे प्राप । यौवनेनैव हि युवतयः प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः । अत्र द्वितीयपाद आसवरूपकारणाभावेऽपि तत्कार्यमदोक्तेर्विभावनालंकारः । तदुक्तम्—' कारणाभावे कार्योत्पत्तिर्विभावना ' इति । प्रथमतृतीययोस्त्वारोप्यमाणयोर्मण्डनमदनास्त्रत्वयोः प्रकृतोपयोगात्परिणामालंकारः । तल्लक्षणं तूक्तम् ॥

**उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥**

32. Like a picture made vivid by the brush or a lotus opened by the rays of the Sun, her body beautiful on all sides, became distinguished *(vibhakta)* by fresh youth.

**उन्मीलितमिति** ॥ नवयौवनेन प्रथमयौवनेन विभक्तमभिव्यञ्जितम् । पीनजघनादिसंस्थानमित्यर्थः । तस्याः पार्वत्या वपुस्तूलिकया कूर्चिकया । शलाकयेत्यर्थः । ' तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः ' इति विश्वः । उन्मीलितं रञ्जनद्रव्येणोद्भासितं समुत्कीर्णम् । रूपमिति यावत् । चित्रमालेख्यमिव । सूर्यांशुभिर्भिन्नं विकसितमरविन्दं पद्ममिव । चतस्रोऽस्रयो यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति चतुरस्रशोभि । ताच्छील्ये णिनिः । बभूव । चित्रारविन्दयोस्तूलिकातरणिकिरणसंबन्ध इव स्वतःसिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूवेत्यर्थः ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते मानुषाणां केशादारभ्येति धार्मिकाः । संप्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते—

**अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ**
**आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥**

33. Her feet, as if emitting red colour through treading, with the lustre of the nails of the raised toes, brought the unstable grandeur of the land-growing lotuses to the earth.

**अभ्युन्नतेति** ॥ अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिर्निमित्तेन निक्षेपणान्निर्भर—

---

१ साधु.

न्यासाद्धेतोः रागमन्तर्गतं लौहित्यम्। 'रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु' इति शाश्वतः। उद्गिरन्तौ वमन्तौ। बहिर्निःसारयन्ताविव स्थितावित्यर्थः। अत्रोद्गिरते-गौणार्थत्वान्न ग्राम्यतादोषः प्रत्युत गुण एव। यथाह दण्डी—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥' इति तस्याश्चरणौ तच्चरणौ। पृथिव्यामव्यवस्थां व्यवस्थारहिताम्। संचारिणीमित्यर्थः। स्थलारविन्दश्रियमाजह्रतुः। स्थलविशेषणान्नियतलौहित्यलाभः। अत्र सामुद्रिकः—'यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ। निगूढगुल्फौ निहतौ सा स्यान्नृपतिसंमता॥' इति। अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसंभवादरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालंकारः। सा च संबन्धेऽसंबन्धलक्षणातिशयोक्त्यनुप्राणिताव्यवस्थामित्यनेन स्थलारविन्दस्य स्थैर्यसंबन्धेऽसंबन्धाभिधानात्। निदर्शनालक्षणं तु —'असंभवद्धर्मयोगादुपमानोपमेययोः। प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना॥' इति॥

**सा राजहंसैरिव संनताङ्गी[1] गतेषु लीलाञ्चितविक्रमेषु[2]।**
**व्यनीयत प्रत्युपदेशलुब्धै[3]रादित्सुभिर्नूपुरसिञ्जितानि॥ ३४॥**

34. In her movements with steps adorned with grace, she with a stooping body, was, as it were, instructed by the royal swans coveting instruction in return, desirous of grasping (learning) the jingling of (her) anklets.

**सेति**॥ प्रत्युपदेशलुब्धैः। 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथवा विद्यया विद्या चतुर्थी नोपपद्यते॥' इति न्यायादिति भावः। तदेव व्यनक्ति—नूपुरसिञ्जितान्यादित्सुभिरादातुमिच्छुभिः। मञ्जीरसिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः। राजहंसैः संनताङ्गी। कुचभारादिति भावः। सा पार्वती लीलाभिर्विलासैरञ्चिताः पूजिता विक्रमाः पादन्यासा येषु तेषु। 'अञ्चेः पूजायाम्' इतीडागमः। 'लीलाविलासक्रिययोः' इत्यमरः। गतेषु विषयेषु व्यनीयतेव विनीता किमु। अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा॥

**वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः॥ ३५॥**

35. There was, as it were, great effort on the part of the creator who had created round, symmetrical (*anupurva*) and not too long, auspicious thighs, in (creating) charm that had to be created in the work of fashioning the rest of her limbs.

**वृत्तेति**॥ वृत्ते वर्तुले पूर्वमनुगतेऽनुपूर्वे। गोपुच्छाकार इत्यर्थः। वृत्ते च तेऽनुपूर्वे च वृत्तानुपूर्वे। नातिदीर्घे च। महाविभाषया नसमासः। नञो विशेषणत्वं

---

१ संनताशा. २ विभ्रमेषु. ३. लब्धैः.

चशब्दप्रयोगादेव ज्ञेयम् । शुभे मङ्गले तस्या इमे तदीये जङ्घे प्रसृते । 'जङ्घा तु प्रसृता' इत्यमरः । सृष्टवतो निर्मितवतो विधातुः स्रष्टुः शेषाङ्गनिर्माणविधौ । जङ्घाव्यतिरिक्तावयवनिर्माणार्थमित्यर्थः । उत्पाद्ये पुनः संपाद्ये लावण्ये कान्तिविशेषविषये । लावण्यलक्षणं तूक्तम् । यत्न आसेव बभूवेवेत्युत्प्रेक्षा । उपादानमन्तरेण कार्यस्य दुष्करत्वात्तदङ्गानां च लावण्योपादानकत्वात्पूर्वसंपादितस्य च जङ्घार्थमेव कात्स्न्येन विनियोगात्पुनर्लावण्यसंपादने यत्नः स्यादेवेत्येतादृक्सौन्दर्ये तज्जङ्घे इति भावः । आसेति बभूवार्थे 'तिङन्तप्रतिरूपकमव्ययम्' इत्याह शाकटायनः । वल्लभस्तु—'न तिङन्तप्रतिरूपकमव्ययम्' 'अस्तेर्भूः' इति भ्वादेशनियमात्तादृक्तिङन्तस्यैवाभावात् । किंतु 'कवीनामयं प्रामादिकः प्रयोगः' इत्याह । वामनस्तु—'अस गतिदीप्त्यादानेष्विति धातोर्लिटि रूपमिदम्' इत्याह । अस इत्यनुदात्तेद्दीप्त्यर्थे । आस दिदीपे । प्रवृत्त इत्यर्थः ॥

**नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।**
**लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥ ३६ ॥**

36. Trunks of the lords of elephants due to their hardness (roughness) in skin, (and) species of plantain trees on account of their extreme coldness, became excluded as standards of comparison for her thighs, though in this world, they have obtained a plump form.

**नागेन्द्रेति** ॥ नागेन्द्राणामैरावतादीनां हस्ताः करास्त्वचि चर्मणि कर्कशत्वात्कदलीविशेषा रामरम्भादय एकान्तशैत्यान्नियतशैत्याद्धेतोः लोके परिणाहि वैपुल्ययुक्तम् । 'परिणाहो विशालता' इत्यमरः । रूपं लब्ध्वापि । अपिशब्दात्करिकदलीमात्रस्य तादृक्परिणाहो नास्तीति भावः । तस्या ऊर्वोस्तदूर्वोरुपमानबाह्या जाता उपमानक्रियानर्हा बभूवुः । तदूर्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः ॥

**एतावता नन्वनुमेयशोभि काञ्चीगुणस्थानमनिन्दितायाः ।**
**आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥**

37. Indeed, by this much was the part for (wearing) the thread of the girdle whose beauty could only be guessed, of that blameless (Parvati) was placed later, by Shiva (Girisha) on his lap which was not to be coveted by other ladies.

**एतावतेति** ॥ अनिन्दिताया अनवद्यायाः पार्वत्याः काञ्चीगुणस्थानं नितम्बबिम्बमेतावता नन्वेतावतैव । 'प्रश्नावधारणानुनयामन्त्रणे ननु' इत्यमरः । शोभत इति शोभि । आवश्यके णिनिः ततस्तप्रत्ययः । अनुमेयं शोभित्वं शोभा यस्य तदनुमेयशोभि 'त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः' इत्याह वामनः । पश्चादादौ नैःस्पृह्येऽपि पश्चात् ।

१ कान्ति.

तपश्चर्यानन्तरमित्यर्थः । गिरौ शेत इति गिरिशः शिवः । 'गिरौ डश्छन्दसि' इति डप्रत्ययः । भाषायामपि क्वचिदिष्यते । अथवा गिरिः कैलासोऽस्यास्तीति गिरिशः । लोमादित्वाच्छप्रत्ययः । तेन गिरिशेन । अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यनन्यनारीकमनीयस्तमङ्कं निजोत्सङ्गमारोपितमधिरोपितमिति यत् । एतावता लिङ्गेनेति पूर्वेगान्वयः । रोहतेण्यन्तात्कर्मणि क्तः । 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः । गत्यर्थविवक्षायां द्विकर्मकत्वम् । प्रधाने कर्मणि क्तः । गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्यं गिरिशाङ्कारूढत्वाद्व्यतिरेकेण नार्यन्तरनितम्बबिम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिका । दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिवृत्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसंरम्भेण ॥

**तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवलोमराजिः[1,2] ।**
**नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३८ ॥**

38. The thin row of new hair merging into the deep hollow of her navel having crossed the knot (of the garment), looked to advantage, as if (it were) the lustre of the blue (lit. not white) central gem on her girdle.

**इति तस्या** ॥ नीवीं वस्त्रग्रन्थिम् । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । अतिक्रम्यातीत्य नतं निम्नं नाभिरंध्रं प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्वत्या नवलोमराजिः सितेतरस्यासितस्य । इन्द्रनीलस्येत्यर्थः । तस्याः पार्वत्याः मेखला तन्मेखला । तस्या इत्यनुवृत्तौ पुनस्तच्छब्दोपादानं वाक्यान्तरत्वात्सोढव्यम् । यद्वा तस्या नीव्या मेखला तन्मेखला तत्र तदवस्थानात् । तस्या मध्यमणेरर्चिः प्रभेव रराज । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः ॥

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन[3] कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥**

39. She with a waist slender like the middle part of an altar, bore on the middle (part of her body) three charming folds, a stair-case, as it were, erected by fresh youth for the ascent of Cupid.

**मध्येनेति** ॥ 'वेदिः परिष्कृता भूमिः' इत्यमरः । वेदिविलग्नमध्या

---

१ नीला. २ राजी. ३ नवयौवनेन कामेन.

३८--३९ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

गम्भीरनाभीह्रदसंनिधाने[1] रराज नीला नवलोमराजिः ।
मुखेन्दुभीरुस्तनचक्रवाकचञ्च्च्युता[2] शैवलमञ्जरीव ॥ ( १ नाभि. २ भीतं. )

वेदिवत्कृशमध्या । तनुमध्येति यावत् । सा बाला पार्वती । मध्येन मध्यभागेन चारु सुन्दरं वलित्रयं कामस्यारोहणार्थं नवयौवनेन प्रयुक्तं रचितं सोपानमिव बभारेत्युत्प्रेक्षा ॥

**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु[1] तथा प्रवृद्धम्[2] ।**
**मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४० ॥**

40. The white pair of breasts of that lotus-eyed one had so developed pressing against each other that space for even a lotus fibre was not available between that dark-nippled (pair).

**अन्योन्येति** ॥ अन्योन्यं परस्परम् । 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति द्विरुक्तिः । 'समासवच्च बहुलम्' इति बहुलवचनादसमासपक्षेपि पूर्वपदस्थस्य सुपः सुर्वक्तव्यः । उत्पीडयदुपरुन्धत्पाण्डु गौरमुत्पलाक्ष्याः स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धम् । कर्तरि क्तः । श्याममुखस्य कृष्णचूचुकस्येति स्वरूपवर्णनम् । तस्य स्तनद्वयस्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं बिसतन्तुमात्रावकाशोऽप्यलभ्यं लब्धुमशक्यम् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । अत्र संबन्धेऽसंबधरूपातिशयोक्त्यलंकारः । कुचयोः पीवरत्वातिशयार्थमवकाशसंबन्धेऽप्यसंबन्धाभिधानादिति ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह--

**शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।**
**पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

41. My guess (is) that those two hands of hers which were made (into) a noose for the neck of Hara by Cupid, though defeated, had delicacy greater than that of the Shirisha flower.

**शिरीषेति** ॥ तस्या इमौ तदीयौ बाहू शिरीषपुष्पादधिकं सौकुमार्यं मार्दवं ययोस्तथोक्ताविति मे वितर्क ऊहः । कुतः । यौ बाहू पराजितेनापि पूर्वं निर्जितेनापि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ । कण्ठालिङ्गनं प्रापिताविल्यर्थः - तदसाध्यसाधनात्तत आधिक्यमिति भावः । अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात्परिणामालंकारः ॥

**कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।**
**अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ ४२ ॥**

42. The relation of the decoration and the decorated became mutual to (both), her neck beautiful (undulating-*Bandhura)* by the breasts, and the circular *(nistala)* string of pearls, on account of their creating elegance in each other.

---

१ चारु. २ विवृद्धम्.

**कण्ठस्येति** ॥ स्तनाभ्यां बन्धुरस्योन्नतस्य पार्वत्याः कण्ठस्य गलस्य निस्तलस्य वर्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च । 'वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम्'। 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इति चामरः । अन्योन्यशोभाजननाद् भूषण-भूष्यभावोऽलंकारालंकार्यभावः । साधारणः समानो बभूव । उभावप्यन्योन्यस्य भूष्यौ भूषणे च बभूवतुरित्यर्थः । अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेणान्योन्यभूषाजनक-त्वादन्योन्यालंकारः । तदुक्तम्--'परस्परं क्रियाजननमन्योन्यम्' इति ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वचोभङ्ग्याह--

**चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।**
**उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥**

43. (Laxmi) residing in the Moon does not enjoy the excellences of the sun-lotuses, (nor) the splendour of the Moon while resorting to the sun-lotuses; but having resorted to the face of Uma, the (same) fickle Laxmi got pleasure residing in both.

**चन्द्रमिति** ॥ लोला चपला । परिभ्रमणशीलेत्यर्थः । लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान्सौगन्ध्यादीन्न भुङ्क्ते नानुभवति । पद्माश्रिता सती चन्द्रमस इमां चान्द्रमसीमभिख्यां शोभाम् । 'अभिख्या नामशोभयोः' इत्यमरः । अमृतवदानन्दिनीं न भुङ्क्ते । उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्तां द्विसंश्रयां प्रीतिमानन्दमवाप । तत्रोभयगुणसंभवादिति भावः । अत्रोपमानभूतचन्द्र-पद्मापेक्षयोपमेयस्योमामुखस्याधिकगुणवत्त्वोक्त्या व्यतिरेकालंकारः । तदुक्तम्—'भेदप्रा-धान्येनोपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति ॥

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।**
**ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः[1] स्मितस्य ॥ ४४ ॥**

44. If a flower were placed on foliage or a pearl (were to) stand on clean coral, then (alone) can (either) imitate her bright smile with brilliance spreading over the red lips.

**पुष्पमिति** ॥ पुष्पं पुण्डरीकादिकं प्रवाले बालपल्लव उपहितं निहितं स्याद्यदि । 'प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे' इति विश्वः । मुक्ताफलं वा स्फुटे निर्मले विद्रुमे

---

१ ताम्रोष्ठ.

४१—४२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम्
नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

तिष्ठतीति स्फुटविद्रुमस्थं स्याद्यदि ततस्तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्यस्ता प्रसृता रुक्कान्तिर्यस्य तथोक्तस्य तस्याः पार्वत्याः स्मितस्यानुकुर्यादित्यर्थः । अत्र 'माषाणामश्नीयात्' इतिवत्संबन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्चासंबन्धेऽपि संबन्धोक्त्यातिशयोक्तिः । 'सा च संभावना' इत्यलंकारसर्वस्वकारः । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात्प्रतीपालंकारः । तदुक्तम्--'उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपः' इति लक्षणात् । स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥

**स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।**
**अप्यन्यपुष्टा[1] प्रतिकूलशब्दा[2] श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥**

45. While that one of agreeable speech spoke in a voice pouring forth nectar, as it were, even the cuckoo (*anyapushta*) was to the listener, of unpleasant notes, like a disordered (discordant) flute (*vitantri*) being played upon.

**स्वरेणेति** ॥ अभिजातवाचि मधुरभाषिण्यां तस्यां पार्वत्याममृतस्रुतामृतस्राविणेव । क्विप् । स्वरेण नादेन प्रजल्पितायामालपन्त्याम् । कर्तरि क्तः । अन्यैः काकादिभिः पुष्टान्यपुष्टा कोकिलापि । मुख्यया वृत्त्या जातिवचनत्वाभावान्ङीबभावः । ताड्यमाना वाद्यमाना विषमबद्धा तन्त्रीर्वितन्त्रीरिव । 'अवितॄस्तृ तन्त्रिभ्य ईः' इति तन्त्रिधातोरौणादिक ईप्रत्ययः । ङीबभावान्न 'हल्ङ्याब्भ्यः-' सुलोपः । तदुक्तम्—'अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुणादिषु । स्त्रीलिङ्गानाममीषां तु न सुलोपः कदाचन ॥' इति । एते ङीबन्ता न भवन्तीत्यर्थः । श्रोतुर्जनस्य प्रतिकूलशब्दाः कर्णकठोरनादा भवन्तीति शेषः ॥

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।**
**तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ४६ ॥**

46. Was indeed the tremulous glance of the large-eyed one, not different from a blue lotus in a windy place, taken by her from the female deer, or borrowed from there (her) by the female deer themselves?

**प्रवातेति** ॥ प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदम् । तत्सदृशमित्यर्थः । अधीरविप्रेक्षितं चकितविलोकितमायताक्ष्या विशालनेत्रया तया पार्वत्या मृगाङ्गनाभ्यो गृहीतमभ्यस्तं नु । अथवा मृगाङ्गनाभिस्ततस्तस्याः पार्वत्याः । पञ्चम्यास्तसिल् । गृहीतं नु । अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित् तदुपजीविसंदेहालंकार इत्यन्ये । उभयोः संकर इत्यपरे ॥

---

१ अन्यपुष्टाः. २ शब्दाः.

**तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या ।**
**तां वीक्ष्य [1]लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥ ४७ ॥**

47. The bodiless (Cupid) gave up (his) pride for the beauty of his bow after seeing that splendour charming by graceful movements which (was existent) on her eyebrows with broad lines, as if produced by a pencil, with collyrium.

**तस्या इति** ॥ आयतलेखयोर्दीर्घरेखयोस्तस्याः पार्वत्या भ्रुवोः संबन्धिनी शलाकयाञ्जनेन निर्मितेव स्थिता या कान्तिर्लीलाचतुरां विलाससुभगां तां कान्तिं वीक्ष्यानङ्गः स्वचापसौन्दर्येण यो मदस्तं मुमोच । इह सौन्दर्यातिशयोक्तिः ॥

**लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।**
**तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्यः ॥ ४८ ॥**

48. If shame were to exist in the minds of lower animals, the female Chamaris would doubtless slacken (their) affection for (their) hair on seeing that luxuriant mass of hair of the daughter of the king of mountains.

**लज्जेति** ॥ तिरश्चां तिर्यग्जातीनां चेतसि लज्जा स्याद्यदि । संशयाभावोऽसंशयम् । संदेहो नास्तीत्यर्थः । पर्वतराजपुत्र्याः 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन् । तं प्रसिद्धं केशपाशं केशकलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । प्रसमीक्ष्य दृष्ट्वा चमर्यो मृगीविशेषा बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावो बालप्रियत्वम् । प्रियबालत्वमित्यर्थः । आहिताग्न्यादिपाठाद्वा परनिपातः । 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । शिथिलं कुर्युः । निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः अतएवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्योऽलंकारः । तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

---

१ लोलाम्.

४५-४६ श्लोकयोर्मध्ये इमौ श्लोकौ दृश्येते—

कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं सुतरां रराजे[1] ।
मत्वा[2] भवित्रीं त्रिपुरारिपत्नीं तां[3] सेवमानाविव पुष्पवन्तौ ॥
( १ नितरां बभास. २ ज्ञात्वा. ३ सेवासमेतौ. )
ताटङ्कपत्रं विरराज तस्याः शैलात्मजायाः श्रवणद्वयस्थम् ।
मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पवन्तौ ॥ (१ युग्मम्. २ पुष्पदन्तौ)

49. She was created by the creator of the universe, with great effort, as it were, to see beauty existing in one (object), out of a collection of all material of comparison set in respective places.

**सर्वोपमेति** ॥ किंबहुना सा पार्वती विश्वसृजा विधात्रैकत्र तिष्ठतीत्येकस्थं तस्य सौन्दर्यस्य । सर्ववस्तुगतस्येत्यर्थः । दिदृक्षयेव प्रयत्नाद्यथाप्रदेशं क्रमाद्विनिवेशितेन स्थापितेन सर्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमानवस्तूनां समुच्चयेन समाहारेण निर्मिता । दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥

**तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं[1] भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

50. It is said *(kila)* that once Narada wandering at his sweet will, on seeing that maiden by the side of her father, foretold her (to be) the only future bride of Hara, occupying half of his body through love.

**तामिति** ॥ कामेनेच्छया चरतीति कामचरो नारदः । कदाचित्पितुर्हिमवतः समीपे कन्यां तां पार्वतीं प्रेक्ष्य किल प्रेम्णा न त्वन्यथा हरस्य शिवस्यार्धं हरतीत्यर्धहरा । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः । शरीरस्यार्धहरां शरीरार्धहराम् । कुलधुरंधरादिवद-वयवद्वारा समुदायविशेषकत्वात्समासः । अन्यथा त्वर्धस्य समप्रविभागवचनत्वादर्धशरीरेति स्यात् । एकवधूमसपत्नीकां भार्याम् । 'पूर्वकाल-' इत्यादिना समासः भवित्रीं भाविनीं समादिदेश । हरस्यार्धाङ्गहारिण्येकपत्नी भविष्यतीत्यादिष्टवानित्यर्थः ॥

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः[2] ।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥**

51. Hence her father abstaining from desire for any other bridegroom, waited even in her mature age. For other luminaries except the fire do not deserve oblation sanctified with mantras (sacred formulas).

**गुरुरिति** ॥ गुरुः पिता । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । अतो नारद-वचनाद्धेतोरस्याः पार्वत्याः प्रगल्भे वयस्यपि यौवने सत्यपि निवृत्तोऽन्यस्मिन्वरे जामातर्यभिलाषो यस्य स तथोक्तः सन् । 'वरो ना रूपजामात्रोः' इति वैजयन्ती । तस्थौ । वरान्तरं नान्विष्टवानित्यर्थः । ननु कुतोऽसौ निर्वन्ध इत्यत आह--ऋत इति । तथाहि मन्त्रैः पूतं संस्कृतं हूयत इति हव्यमाज्यादिकं कृशानोः पावकादृते कृशानुं

---

१ एकवधूः   २ अन्यतर.

विना । 'अन्यारादितर–' इत्यादिना पञ्चमी । अपराणि तेजांसि सुवर्णादीनी नार्हन्ति न भजन्तीत्यर्थः । ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षेति भावः ॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह—

**अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥**

52. For the mountain was not able to get (his) daughter accepted by the God of gods (Shiva) who was not asking (for her); a good (man) resorts to indifference even in the case of a desired object, through fear of rejection of (his) request.

**अयाचितारमिति** ॥ आद्रर्हिमवानयाचितारमयाचमानं देवदेवं महादेवं सुतां पार्वतीं ग्राहयितुं स्वयमाहूय परिग्राहयितुं न शशाक नोत्सेहे । तथाहि साधुः सज्जनः । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः । अभ्यर्थनाभङ्गभयेन याच्ञावैफल्यभीत्येष्टेऽप्यर्थे विषये माध्यस्थ्यमौदासीन्यमवलम्बते ॥

न च तथैव स्थितः किं तूपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति—

**यदैव पूर्वे जनने शरीरं सा दक्षरोषात्सुदती ससर्ज[1] ।**
**तदाप्रभृत्येव[2] विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥**

53. Exactly when that young lady (*sudati*—with beautiful teeth) discarded her body, in the previous birth, through anger towards Daksha, since then the lord of beings (*Pashunam patih*-Shiva), leaving off attachment remained without a wife.

**यदेति** ॥ शोभना दन्ता यस्याः सा सुदती । 'वयसि दन्तस्य दतृ' इति दत्रादेशः । 'उगितश्च' इति ङीप् । सा पार्वती पूर्वे जनने पूर्वस्मिञ्जन्मनि । 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिन्नादेशविकल्पः । 'पूर्वं ज्वलने' इति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगाग्नौ । यदा यस्मिन्काले दक्षरोषाच्छरीरं देहं ससर्ज तत्याज, तदाप्रभृत्येव तदाद्येव यथा तथा पशूनां पतिः शिवो विमुक्तसङ्गस्त्यक्तविषयासङ्गः सन् । अपरिग्रहोऽपत्नीकोऽभूत् । स्त्र्यन्तरं न परिजग्राहेत्यर्थः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः ॥

**स कृत्तिवासास्तपसे यतात्मा[3] गङ्गाप्रवाहोक्षितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किंचित्क्वणत्किंनरमध्युवास[4] ॥ ५४ ॥**

---

१ स्वयमुत्ससर्ज. २ ततःप्रभृति. ३ जितात्मा. ४ वसानाः.

54. He with a hide for his garment, restraining his self (mind-Atma) for penance, stayed on some summit of the Himalaya with Devadaru (pine trees) watered by the stream of the Ganges, smelling of musk (and) with the Kinnaras singing (on it).

**स इति** ॥ कृत्तिवासाश्चर्माम्बरः । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । यतात्मा नियतचित्तः सः पशुपतिस्तपसे तपोर्थं गङ्गाप्रवाहेणोक्षिताः सिक्ता देवदारवो यस्मिंस्तत्तथोक्तम् । मृगनाभिगन्धि कस्तूरीगन्धवत् । कस्तूरीमृगसंचारादिति भावः । 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः । क्वणन्तो गायन्तः किंनरा यस्मिंस्तत्तथोक्तम् । किंचित्किमपि हिमाद्रेः प्रस्थं सानुमध्युवास । कुत्रचित्प्रस्थ उवासेत्यर्थः । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः ॥

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः ।**
**मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

55. His Ganas (attendants) having ear-ornaments of Nameru flowers, wearing birch-barks agreeable to touch, besmeared with red arsenic *(manasshila)*, sat on flat rocks covered with benzoin *(shaileyam—*i.e. *Shilajatu)*.

**गणा इति** ॥ गणाः प्रमथगणाः । 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती । नमेरुप्रसवावतंसाः सुरपुंनागकुसुमशेखराः । 'नमेरुः सुरपुंनागः' इति विश्वः । स्पर्शवतीः सुखस्पर्शाः । मृद्वीरित्यर्थः । प्रशंसायां मतुप् ! भूर्जत्वचो भूर्जवल्कलानि दधानाः । वसाना इत्यर्थः । मनःशिलाभिर्धातुविशेषैर्विच्छुरिता अनुलिप्ताश्च सन्तः । शिलायां भवं शैलेयम् । गन्धौषधिविशेषः । शिलायाः 'स्त्रीभ्यो ढक्' इति भवार्थे ढक् । 'शिलाजतु च शैलेयम्' इति यादवः । तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदुः । उपविविशुरित्यर्थः ।

**तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान् ।**
**दृष्टः कथंचिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

56. The bull, noisy (kala) with pride, scratching the rocks of masses of snow with the ends of his hoofs, looked at with difficulty by the *gavayas,* bellowed aloud intolerant of the roar of a lion.

**तुषारेति** ॥ तुषारसंघाता हिमघनास्त एव शिलास्ताः खुराग्रैः समुल्लिखन्विदारयन्दर्पेण कलो मधुरध्वनिर्यस्य स दर्पकलो विविग्नैर्भीतैर्गवयैर्गोसदृशमृगविशेषैः कथंचित्कृच्छ्रेण दृष्टः । ककुदमस्यास्तीति ककुद्मान्वृषभोऽसोढः सिंहानां ध्वनिर्येन स

सिंहध्वनिमसहमानः सन्। उन्ननादोच्चैर्ननाद। जगर्जेत्यर्थः। स्वभावोक्तिरलंकारः। तदुक्तम्—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति ॥

**तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः।**
**स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥ ५७ ॥**

57. There, establishing fire enkindled with *Samidhs* (sacrificial fuel), just another form of his, the eight-formed (Shiva), himself the creator of the fruit of penance, practised penance with some (indescribable) desire.

**तत्रेति** ॥ तपसः फलानामिन्द्रत्वादीनां स्वयं विधाता जनयिता। दातेत्यर्थः। अष्टौ मूर्तयो यस्य सोऽष्टमूर्तिरीश्वरः। 'भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः' इति। तत्र प्रस्थे स्वं स्वकीयमेव मूर्त्यन्तरं मूर्तिभेदं समिद्भिः समिद्धं दीपितमग्निमाधाय प्रतिष्ठाप्य केनापि कामेन कयापि फलकामनया तपश्चचार चक्रे। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात्कामेनेत्युक्तम्। तस्यावाप्तसमस्तकामत्वात्केनापीत्युक्तम् ॥

**अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा।**
**आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥**

58. The lord of mountains directed his devout (prayatam) daughter, accompanied by friends, for his propitiation, by worshipping him, the highly respectful, worshipped of the heaven-dwellers (Gods), with the arghya (a respectful offering).

**अनर्घ्येति** ॥ अद्रीणां नाथोऽद्रिनाथो हिमवान्। अर्घं मूल्यमर्हतीत्यर्घ्यः। 'मूल्ये पूजाविधावर्घः' इत्यमरः। 'दण्डादिभ्यो यः' इति यप्रत्ययः। अर्घ्यो न भवतीत्यनर्घ्यस्तमनर्घ्यम्। अमूल्यमित्यर्थः। स्वर्गं ओकः स्थानं येषां तेषां स्वर्गौकसां देवानामर्चितम्। देवैः पूज्यमानमित्यर्थः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति षष्ठी। तमीश्वरमर्घ्येण पूजार्थोदकेन। 'पादार्घाभ्यां च' इति यत्प्रत्ययः। 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः। अर्चयित्वा पूजयित्वास्येश्वरस्याराधनाय सखीभ्यां जयाविजयाभ्यां समेतां प्रयतां नियतां तनूजां सुतां समादिदेशाज्ञापयामास ॥

**प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने।**
**विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ ५९ ॥**

---

१ अयम्. २ समृद्धम्.

59. Girish allowed her to serve, though becoming an obstacle in (his) concentration. Those alone are resolute, whose minds are not affected, even though there exists a cause of perturbation.

**प्रत्यर्थीति** ॥ गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि । 'सुप्सुपे' ति समासः । श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम् । सेवका हि सेव्ये दत्तकर्णा भवन्ति । इच्छार्थे सन्प्रत्ययः । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । तां पार्वतीमनुमेनेऽङ्गीचकार । न प्रतिषिद्धवानित्यभिप्रायः । न चैतावता धीरस्य कश्चिद्विकार इत्याशयः । धीरत्वमेवार्थान्तरन्यासेनाह—**विकारेति** । विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसंनिधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते त एव धीराः । 'विक्रियन्ते' इति कर्मणि लट् ॥

शुश्रूषाप्रकारमेवाह—

**अवचितबलिपुष्पा वेदिसंमार्गदक्षा**<br>
**नियमविधिजलानां बर्हिषां चोपनेत्री ।**<br>
**गिरिशमुपचचार प्रत्यहं सा सुकेशी**<br>
**नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६० ॥**

60. Collecting flowers for worship, careful in cleaning the altar, fetching grass and water (barhis = Darbha grass) for the daily ritual, that beautiful-haired one daily served Shiva (Girish) with her fatigue removed by the rays of the Moon on his head.

**अवचितेति** ॥ सुकेशी शोभनमूर्धजा । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । सा पार्वत्यवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा वेदेर्नियमवेदिकायाः संमार्गे संमार्जने दक्षा नियमविधेर्नित्यकर्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानां चोपनेत्र्यानेत्री सती तस्य गिरिशस्य शिरसि चन्द्रस्य पादै रश्मिभिः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । नियमितपरिखेदा निवर्तितपरिश्रमा सत्यहन्यहनि प्रत्यहम् । 'अव्ययं विभक्तिसमीपसमृद्धि-' इत्यादिना नियतार्थेऽव्ययीभावः । 'नपुंसकादन्यतरस्याम्' इत्यच्प्रत्ययः । गिरिशमुपचचार शुश्रूषांचक्रे ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्य उमोत्पत्तिर्नाम प्रथमः सर्गः ।

---

# कुमारसंभवम् ।

## THE BIRTH OF KUMARA

### द्वितीयः सर्गः ।

*Canto II*

~~~:०:~~~

**तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।**
**तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥ १ ॥**

1. At that time, oppressed by Taraka, the Gods (dwellers of heaven), making Turasaha (Indra) their leader (putting him in front), went to the abode of Brahman (of the self-existent one).

**तस्मिन्निति** ॥ तस्मिन्काले पार्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्रणखपुत्रेण केनचिदसुरेण विप्रकृता उपप्लुता दिवमोकः स्थानं येषां ते दिवौकसो देवाः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । द्यौरोक इति पक्षे पृषोदरादित्वात्साधुः । तुरं त्वरितं साहयत्यभिभवतीति तुराषाट् । साहयतेश्चौरादिकात्क्विप् । 'नहिवृतिवृषि–' इत्यादिना पूर्वपदस्य दीर्घः । प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टाबन्त इत्याचष्टे । तं तुरासाहं देवेन्द्रम् । अजादिषु साड्रूपत्वाभावात् 'सहेः साडः सः' इति षत्वं न भवति । पुरोधाय पुरस्कृत्य। स्वयंभुवो ब्रह्मण इदं स्वायंभुवम् । संज्ञापूर्वकविधेरनित्यत्वात् 'ओर्गुणः' इति गुणो न । धाम स्थानं ययुः ब्रह्मलोकं जग्मुरित्यर्थः ॥

**तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।**
**सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥**

2. To them, with the lustre of their faces faded completely (or with their lovely faces turned pale), did Brahma manifest (himself), just as the Sun (Didhitiman—one possessed of rays) (manifests himself) in the morning, to the lakes with their lotuses asleep (i.e., closed).

**तेषामिति** ॥ परिम्लाना परिक्षीणा मुखकान्तिर्येषां तथोक्तानां तेषां देवानां ब्रह्मा सुप्तपद्मानां मुकुलितारविन्दानां सरसां प्रातर्दीधितिमान्सूर्य इवाविरभूत् । प्रकाशोऽभूदित्यर्थः । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । सूर्योपमानेन तेषां म्लानिहरणत्वं
~~~

सूचितम् । अत्रोपमालंकारः । तल्लक्षणं तु—' स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चैकपदोपमा ॥ ' इति ॥

**अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥**

3. Now, to the creator of all (the universe) having faces facing all sides and the lord of speech, they all, after salutations, approached (with prayers) in words full of meaning (i.e., arthya — not deviating from proper sense).

**अथेति** ॥ अथाविर्भावानन्तरं सर्वे ते देवाः सर्वतः समन्ततो मुखानि यस्य तं सर्वतोमुखम् चतुर्मुखमित्यर्थः । वाचां विद्यानामीशं सर्वस्य जगतो धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य । अर्थादनपेताभिरर्थ्याभिः । अर्थयुक्ताभिरित्यर्थः । ' धर्मपथ्यर्थन्यायादनपेते ' इति यत्प्रत्ययः । वाग्भिरुपतस्थिरे । तुष्टुवुरित्यर्थः । ' उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम् ' इत्यात्मनेपदम् ॥

स्तुतिप्रकारमाह ' नमः ' इत्यादिभिः द्वादशभिः श्लोकैः—

**नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

4. Bow to you, the triform, the one whose essence is absolute unity (kevalatman) before the creation, who is divided into the three qualities (Sattva, rajas and tamas) and who later on passed into a differentiated state (bheda).

**नम इति** ॥ हे भगवन्नित्यध्याहार्य व्याख्येयम् । सृष्टेः प्राक् । ' अन्यारात्-इत्यादिनाञ्चूत्तरपदयोगे पञ्चमी । केवलात्मन एकरूपाय । ' आत्मा वा इदमेक एवाग्र आसीत् ' इति श्रुतेः । ' निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ' इत्यमरः । पश्चात्सृष्टिप्रवृत्तिकाले । विभज्यतेऽनेनेति विभागः । गुणानां सत्त्वादीनां त्रयमेव विभागो यस्य तस्मै । ' गुणाः सत्त्वं रजस्तमः ' इत्यमरः । भेदमुपाधिम् । स्रष्टृत्वादिकमित्यर्थः । उपेयुषे प्राप्तवते । ' उपेयिवाननाश्वाननूचानश्च ' इति निपातः । अतएव त्रिमूर्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्यं नमः । ' नमःस्वस्ति-' इत्यादिना चतुर्थी । उक्तं च—' नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च । तमोरूपाय संहारे त्रिरूपाय स्वयंभुवे ॥ ' इति ॥

**यदमोघमपामन्तरुप्तं बीजमज त्वया ।**
**अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥**

5. Oh Aja, (unborn one), the productive (neverfailing, efficacious) seed (that you had) sown in the waters, from that (was produced) the universe, moveable and immoveable (both); (you) are sung as its creator (prabhava).

**यदिति** ॥ न जायत इत्यजः । हे अज, अपां जलानामन्तस्त्वया यदमोघमवन्ध्यं बीजं वीर्यमुप्तं निक्षिप्तम् । 'मुक्तम्' इति पाठे विसृष्टमित्यर्थः । 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः । अतस्ते बीजाच्चराचरं स्थावरजंगमात्मकम् । समाहारे द्वन्द्वैकवद्भावः । विश्वं जगत् । उत्पन्नमिति शेषः । तस्य विश्वस्य । प्रभवत्यस्मादिति प्रभवः कारणं गीयसे । 'अदश्चराचरं विश्वं प्रसवस्तस्य गीयते' इति पाठे अद इदं चराचरं विश्वं तस्य बीजस्य प्रसवो गीयते । लोक इति शेषः । अत्र मनुः—'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥' इति ॥

**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्[1] ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥**

6. Manifesting (udirayan) your greatness by the three states, you alone become the cause of destruction, continuance and creation (of the universe).

**तिसृभिरिति** ॥ एकः सृष्टेः प्राक्केवलस्त्वं तिसृभिरवस्थाभिस्त्रैगुण्यमयीभिर्हरिहरब्रह्मस्वरूपाभिर्महिमानं निजशक्तिमुदीरयन्जृम्भयन्प्रलयस्थितिसर्गाणामन्तस्थित्युत्पत्तीनां कारणतां गतः । इदं 'पश्चाद्भेदमुपेयुषे' (२।४) इत्यस्य विवरणमतो न गतार्थत्वदोषः ॥

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्तिमतो ब्रह्मणो भेदमाह—

**स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।**
**प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥**

7. The male and the female are (but) the two portions of your (one) self who, out of a desire to create, split himself); they two themselves are declared in the smritis (smritam) to be the parents of creation seeking progeny (prasutibhak).

**स्त्रीपुंसाविति** ॥ स्त्री च पुमांश्च स्त्रीपुंसौ । 'अचतुर-' इत्यादिनाच्प्रत्ययान्तो निपातः । सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेर्द्विधाकृतविग्रहस्य ते तवात्मनो देहस्य भागावात्मभागौ । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति विश्वः । तावेव भागौ प्रसूतिभाज उत्पत्तिभाजः । सृज्यत इति स्वर्गस्तस्य । निजसृष्टेरित्यर्थः । माता च पिता च पितरौ । 'पिता मात्रा' इत्येकशेषः । स्मृतौ । वृद्धैरिति शेषः । अत्र मनुः-'द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः' ॥ इति ॥

**स्वकालपरिमाणेन[2] व्यस्तरात्रिदिवस्य ते ।**
**[3]यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ ८ ॥**

---

१ भावौ. २ परिणामेन. ३ यौ स्वप्नावबोधौ तावेव; स्वप्नावबोधौ भूतानां तावेव.

8. In your case, who have separated the night and day by your own measure of time, the (states of) sleep and wakefulness are but the destruction and creation of (all) beings.

**स्वकालेति** ॥ स्वकालस्य परिमाणेन 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इत्युक्तरूपेण व्यस्तं विभक्तं रात्रिंदिवं रात्र्यहनी यस्य तस्य। यद्यपि 'अचतुर–' आदिसूत्रेण रात्रौ च दिवा च रात्रिंदिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि 'दोषामन्यमहः, दिवामन्या रात्रिः।' इत्यादाविवात्रापि प्रातिपदिकार्थवृत्तित्वं कथंचित्प्रयोगबलादाश्रयणीयम्। ते तव यौ तु स्वप्नाववोधौ तावेव भूतानां प्रलयोदयौ संहारसृष्टी। यदाहुः—'यदा स देवो जागर्ति तदैव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते॥' इति। एतच्च दैनंदिनसृष्टिप्रलयाभिप्रायकं, महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात्॥

**जगद्योनिरयोनिस्त्वं जगदन्तो[1] निरन्तकः।**
**जगदादिरनादिस्त्वं जगदीशो[2] निरीश्वरः॥ ९॥**

9. You are the source of the world and yet without origin (i.e. eternal), the destroyer of the world and (yet) without death, the origin of the world and (yet) without beginning, the lord of the worlds and (yet yourself) without a lord.

**जगदिति** ॥ हे भगवन्, त्वं जगद्योनिर्जगत्कारणं स्वयमयोनिरनादित्वादकारणकस्त्वम्। अन्तयतीत्यन्तः। पचाद्यच्। जगतोऽन्तो जगतसंहर्ता स्वयं निरन्तको नित्यत्वादन्तरहितः। त्वं जगतामादिर्जगदादिः। सृष्टेः प्रागपि सन्नित्यर्थः। अतएव त्वमनादिरादिरहितः। त्वं जगतामीशो नियन्ता स्वयं निरीश्वरः। अनियम्य इत्यर्थः। 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतिरेवात्र प्रमाणम्। अत्रायोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः। बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालंकारः। यथाहुः 'विरोधे तु। विरोधाभासः' इति॥

तत्र तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह––

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥ १०॥**

10. You realise yourself by yourself; you create yourself by yourself. By your competent self (atmana kritina) in your own self do you get absorbed.

---

१ अनन्तो जगदन्तकः; जगदन्तोऽप्यनन्तकः. २ जगदीशोऽप्यनीश्वरः.

**आत्मानमिति** ॥ हे भगवन्, त्वमात्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपमात्मनैव वेत्सि जानासि । सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्विकेति भावः । तथात्मानमात्मनैव । आत्मन्येवेत्यत्रापि संबध्यते । स्वस्मिन्नेव सृजसि । अधिष्ठानमपि स्वयमेवेत्यर्थः । 'स्वे महिम्नि प्रतिष्ठितम्' इति श्रुतेः । कृतिना समर्थेन । इदं सर्वत्र संबध्यते । आत्मना स्वेनैवात्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि । लीयतेर्दैवादिकात्कर्तरि लट् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात्सर्वत्रात्मनेति तृतीया । न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः ॥

**द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः[३] ।**
**व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥**

11. You are liquid (and still) hard like a solid (*samghata)*, gross *(sthula)* and yet subtle, light and (yet) heavy, manifest and (yet) other than manifest. You have freedom of will *(prakamya)* in your supernatural powers *(vibhuti*, or manifestations).

**द्रव इति** ॥ त्वमित्यनुषज्यते । हे भगवन्, त्वं द्रवः सरित्समुद्रादिवद्रसात्मकोऽसि । संघातेन निबिडसंयोगेन कठिनो महीधरादिवत् । स्थूल इन्द्रियग्रहणयोग्यो घटादिवत् । सूक्ष्मोऽतीन्द्रियः परमाण्वादिवत् । लघुरुत्पतनयोग्यस्तूलादिवत् । गुरुर्हेमाद्रिवदचलनीयः । व्यक्तः कार्यरूपोऽसि । व्यक्तेतरः कारणरूपश्चासि । एवं विभूतिष्वणिमादिषु ते तव । प्रकामस्य भावः प्राकाम्यं यथाकामत्वम् ॥

**उद्घातः[४] प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥**

12. You are the creator of those words (i.e. Vedas) whose beginning is (marked by) the Pranava (sacred syllable: om), whose utterance is (done with the help of) the three accents (nyaya) (or manifestated in the three systems of Rik, Yajus and Saman), whose action (means) sacrifice and whose result is heaven.

**उद्घात इति** ॥ हे भगवन्, यासां गिरां वाचामुद्घात उपक्रमः प्रणव ओंकारात्मकः । 'ओंकारप्रणवौ समौ' इति । 'स्यादभ्यादानमुद्घात आरम्भः' इति चामरः । इदमुपसंहारस्याप्युपलक्षणम् । 'ब्रम्हणः प्रणवं कुर्यादादावन्ते च सर्वतः । दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥' इति निरुक्तपरिशिष्टयोर्यास्कः । नीयन्त एभिरर्थविशेषा इति

३ गुरुर्लघुः. ४ उद्गीथः.

न्यायाः स्वराः। उक्तं च—' स्वरविशेषादर्थप्रतिपत्तिः ' इति । ' यथेन्द्रशत्रुः स्वरतोऽपराधात् ' इति। यासां गिरां त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वरैरुदीरणमुच्चारणम्। यासां कर्म। प्रतिपाद्यमित्यर्थः। यज्ञो ज्योतिष्टोमादिः। न तु चैत्यवन्दनादिरिति भावः। फलं स्वर्गः। कर्मद्वारेति शेषः। कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे। त्वं तासां गिराम्। वेदानामित्यर्थः। प्रभवत्यस्मादिति प्रभवः कारणम्। प्रणेता स्मर्ता वा मतभेदेन ॥

सांख्यमतेन स्तुवन्ति—

**त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।**
**तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥**

13. You, they regard (amanati) as Prakriti (i.e., Nature, the original source of the material world) that urges forward the objects for (the enjoyment of) the Purusha (the soul) and looks on her (Prakriti).

**त्वामिति** ॥ हे भगवन्, त्वां पुरुषस्यार्थो भोगापवर्गरूपस्तदर्थं प्रवर्तत इति पुरुषार्थप्रवर्तिनी तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम्। ' प्रकृतिः पञ्च भूतेषु प्रधानं मूलकारणम् ' इति यादवः। आमनन्ति कथयन्ति। ' म्ना अभ्यासे ' इति धातोर्लट्। ' पाघ्राध्मास्थाम्ना-' इत्यादिना मनादेशः। प्रकृतिपुरुषभेदाग्रहणात्प्रकृतिपुरुषाभेदव्यपदेशः। त्वामेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनमुदासीनं कूटस्थं पुरुषं विदुर्विदन्ति। ' विदो लटो वा ' इति झेर्जुसादेशः। ' अजामेकां लोहितशुक्लकृष्णाम् ' इति श्रुतिरत्र प्रमाणम् ॥

**त्वं पितॄणामपि पिता देवानामपि देवता।**
**परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥**

14. You are the father of the Pitris (manes themselves), the deity of even the Gods; you are again higher even than the highest, you are the creator of even the (secondary) creators (Vedhas, Daksha and others.)

**त्वमिति** ॥ हे भगवन्, त्वं पितॄणामग्निष्वात्तादीनामपि पिता। तेषामपि तर्पणीय इत्यर्थः। देवानामिन्द्रादीनामपि देवता। तेषामपि यजनीय इत्यर्थः। परतोऽपि परश्चासि। सर्वोत्तरोऽसीत्यर्थः। ' इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ' इति सर्वोत्तरत्वाभिधानात्। वेधसां दक्षादीनामपि विधाता स्रष्टासि ॥

**त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।**
**[1]वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥ १५ ॥**

---

१ वेद्यं वेदयिता; वेद्यश्च वेदिता.

15. You yourself are the oblation and the Hotri (sacrificial priest); (you are) the food and the eternal enjoyer (of it), you are the knowable (object of knowledge) and the knower; and (you are) the meditator and the object of meditation that is the highest.

**त्वमेवेति** ॥ शश्वत्सिद्धः शाश्वतः । शैषिकोऽण्प्रत्ययः । यद्यपि 'कालाट्ठञ्' इति ठञ्स्वादः । अतएव सूत्रकारस्यापि प्रयोगः—'येषां च विरोधः शाश्वतिकः' इति । तथापि प्रयोगवशात्साधुरिति वामन इति । शाश्वतः शश्वत्प्रयुक्तः शाश्वतस्त्वमेव । हूयत इति हव्यं हविराज्यादिकम् । जुहोतीति होता यजमानश्चासि । भोज्यमभ्यवहार्यमन्नम् । 'भोज्यं भक्ष्ये' इति निपातनात्कुत्वाभावः । भोक्तान्नादश्चासि । वेद्यं साक्षात्कार्यं वस्तु वेदिता साक्षात्कर्ता चासि । ध्याता स्मर्ता च । यत्परं वस्तु ध्येयं तच्चासि । साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥

**इति तेभ्यः स्तुतीः श्रुत्वा यथार्था[1] हृदयंगमाः ।**
**प्रसादाभिमुखो वेधाः[2] प्रत्युवाच दिवौकसः ॥ १६ ॥**

16. Thus having heard from them these appropriate (yathartha: true to sense) and pleasant praises, and becoming disposed to favour (them), the creator replied to the dwellers of heaven.

**इतीति** ॥ वेधा ब्रह्मा । इति तेभ्यो देवेभ्यः । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी । यथार्थाः सत्या अतएव हृदयं गच्छन्तीति हृदयंगमा मनोहराः । खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः सन् । दिवौकसो देवान्प्रत्युवाच ॥

अथ कविराह—

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥**

17. In the case of that ancient Kavi (omniscent Brahman) the four-fold flow (pravritti) of the words uttered by (his) four mouths became successful in its object.

**पुराणस्येति** ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति चतुष्टयी चतुर्विधा । 'संख्याया अवयवे तयप्' इति तयप् । 'टिड्ढाणञ्द्वयसज्–' इत्यादिना ङीप् । शब्दानां प्रवृत्तिर्वैखरीप्रमुखा वाग्वृत्तिः । उक्तं च—'वैखरी शब्दनिष्पत्तिर्मध्यमा

१ यथार्थ. २ ब्रह्मा.

श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ॥' इति । पुराणस्य पुरातनस्य । पृषोदरादित्वात्साधुः । कवेः कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समीरिता सती । 'तद्धितार्थ-' इत्यादिनोत्तरपदसमासः । समाहारे चतुर्मुखीति स्यात् । चरितार्थान्वर्थासीत् । चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥

भगवानाह—

**स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः**

**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ १८ ॥**

18. Welcome to you, oh Gods, you of great prowess, possessed of yoke-like (yuga) arms, you who have reached here at the same time, after holding your duties by your own majestic prowess (prabhavashakti or prabhushakti = the first of the three regal powers).

**स्वागतमिति** ॥ हे प्राज्यविक्रमाः प्रभूतपराक्रमा देवाः । 'प्राज्यं भूरि प्रभूतं च' इति यादवः । स्वान्स्वकीयानधीकारान्नियोगान् । 'उपसर्गस्य घञि-' इति वा दीर्घः । प्रभावैः सामर्थ्यैरवलम्ब्यास्थाय । यथाधिकारं स्थित्वापीत्यर्थः । युगपत्समकालं प्राप्तेभ्यः । युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः । युगबाहुभ्यः । दीर्घबाहुभ्य इत्यर्थः । आजानुबाहुत्वं भाग्यलक्षणम् । वो युष्मभ्यम् । 'बहुवचनस्य वस्नसौ' इति वसादेशः । 'कर्मणा यमभिप्रैति—' इत्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदानत्वम् । स्वागतं शोभनमागमनम् ?। काकुरत्रानुसंधेया ॥

**किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा**

**हिमक्लिष्टप्रकाशानि[2] ज्योतींषीव मुखानि वः ॥ १९ ॥**

19. How is it that your faces do not bear your own lustre as (you had it) formerly, like the heavenly bodies (Jyotis) having their brilliance dimmed by frost?

**किमिति** 'वत्साः' इत्युत्तरश्लोकीय ( २।२८ ) संबोधनमत्राप्यनुषञ्जनीयम् । हे वत्साः पुत्रकाः, हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव । 'दीप्तिताराहुताशेषु ज्योतिः' इति शाश्वतः । वो युष्माकं मुखानि पुरा यथा पूर्वमिवात्मीयां द्युतिं न बिभ्रति । इदं किम् । किंनिबन्धनमित्यर्थः । किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥

---

१ इमाम् ; इति. २ प्रभावानि.

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

**प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।**
**वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥**

20. Due to extinction of its light *(archis)* and without its emission of the rainbow, the thunderbolt of the slayer of Vritra (Indra), appears, as it were, to have its angles (or edges) blunted.

**प्रशमादिति** ॥ अर्चिषां तेजसां प्रशमान्निर्वाणादनुद्गीर्णसुरायुधम् । अनुदितचित्रप्रभमित्यर्थः । एतद्वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रम् । कुण्ठिता अश्रयो यस्य तत्कुण्ठिताश्रि कुण्ठितकोटीव लक्ष्यते दृश्यते ॥

**किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।**
**मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥**

21. And again this noose *(Pasha)* in the hand of Prachetas (Varuna) irrestible to the enemies, is resorting to the miserable condition *(dainya)* of a serpent bereft of his power by an incantation *(mantra)*.

**किं चेति** ॥ किं चायमरिदुर्वारो रिपुदुष्प्रधर्षः प्रचेतसो वरुणस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । पाणौ पाशो रज्जुरायुधविशेषः । मन्त्रेण गारुडेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वमाश्रितः । अत्र फणिनिष्ठदैन्यस्य पाशेऽसंभवाद्दैन्यमिव दैन्यमिति कल्पनादसंभवद्वस्तुसंबन्धो निदर्शनालंकारः ॥

**कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥**

22. Kubera's hand with the mace cast away and therefore appearing like a tree with its branches broken, as it were, declares his defeat, (which is) rankling in his mind.

**कुबेरस्येति** ॥ अपविद्धा त्यक्ता गदा येन सोऽपविद्धगदः । अतएव भग्नशाखो द्रुम इव स्थितः कुबेरस्य बाहुर्मनःशल्यम् । दुःखहेतुत्वान्मनसः शल्यप्रायत्वमित्यर्थः । पराभवम् । शत्रुकृतमिति शेषः । शंसतीव कथयतीव । लक्षणयानुमापयतीत्यर्थः । बाहौ मुख्यकथनस्यासंभवादिवशब्दोऽप्यत एव ॥

---

१. अनुद्गूर्ग; अनुगूर्ण. २ कुण्ठितश्रीव. ३ अपि.

यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥

23. Yama too, scratching the ground with his danda (i.e. rod of authority) with its lustre vanished, imparts to it the degradation of an extinguished firebrand, though (it is) never-failing.

**यम इति** ॥ अस्तं नाशमिताः प्राप्ताः । अस्तमिति मकारान्तमव्ययम् । तस्य 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः । अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन्नमोघेऽपि । प्रागिति भावः । अस्मिन्दण्डे निर्वाणालातस्य शान्तोल्मुकस्य । अलातं नाम भूलेखनशलाका तस्य यल्लाघवं क्लैब्यं तत्कुरुते । 'अलातमुल्मुकं ज्ञेयम्' इति हलायुधः । 'निर्वाणोऽवाते' इति निपातनान्निष्ठानत्वम् । अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः ॥

अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम्[1] ॥ २४ ॥

24. How again these Adityas, cooled down by the loss of their heat can be subjected to excessive stares as if they were drawn in a picture?

**अमी इति** ॥ प्रतापक्षत्या तेजसां क्षयेग शीतला अमी आदित्याश्च । द्वादशेति शेषः । कथम् । केन हेतुनेत्यर्थः । चित्रन्यस्ताश्चित्रलिखिता इव । प्रकाममत्यन्तमालोकनीयतां दृश्यतां गताः प्राप्ताः ॥

पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥

25. From the confusion of the Maruts (wind-gods) is inferred the arrest of their speed, like the blockade of the flow of waters (which can be inferred) from their retrograde motion.

**पर्याकुलेति** ॥ मरुतां वायूनाम् । सप्तसप्तानामिति शेषः । पर्याकुलत्वात्स्खलितगतित्वाद्धेतोर्वेगस्य भङ्गोऽम्भसां जलानां प्रतीपगमनात् । उत्तानावरोहादित्यर्थः । ओघस्य संरोधः प्रवाहप्रतिबन्ध इवानुमीयते ॥

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुंकार[3]शंसिनः[2] ॥ २६ ॥

---

१ आयाताः. २ दर्शिनः; दर्शनम्. ३ अहंकार.

26. With the horns of the Moon hanging down on the inclined (avarjita) crests of the clotted hair (jatamouli), the heads of the (eleven) Rudras too announce their sound of defiance being baffled *(kshata-humkara).*

**आवर्जितेति** ॥ आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः। रुद्राणामपि। एकादशानामिति शेषः। मूर्धानः क्षतं हुंकारं शंसन्तीति तथोक्ताः। हुंकारक्षत्यनुमापका इत्यर्थः। हुंकारशस्त्रा हि रुद्रा इति भावः ॥

**लब्धप्रतिष्ठाः प्रथमं यूयं[1] किं बलवत्तरैः।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥**

27. Having first obtained high authority, (or position) are you (now) being set aside (or excluded: *kritavyavritti)* by stronger enemies like general rules *(utsarga)* (set aside) by exceptions *(apavada)?*

**लब्धेति** ॥ प्रथमं पूर्वं लब्धप्रतिष्ठा लब्धस्थितयः। लब्धावकाशा इत्यन्यत्र। यूयं बलवत्तरैः पौरुषातिरेकात्प्रबलतरैः। निरवकाशैरित्यपरत्र। परैः शत्रुभिरुत्सर्गाः सामान्यशास्त्राणि 'मा हिंस्यात्' इत्येवमादीनि। अपोद्यन्त एभिरित्यपवादैः 'गामालभेत' इत्यादिभिर्विशेषशास्त्रैरिव किं कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः। कृतविषयसंकोचरूपबाधा इत्यन्यत्र। 'विषयसंकोच एव बाधः' इत्याचार्याः। निषेधशास्त्रस्यावैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसंकोच इत्यलमतिगहनावगाहनेन ॥

**तद्ब्रूत वत्साः किमितः प्रार्थयध्वं[2] समागताः।**
**मयि सृष्टिर्हि लोकानां[3] रक्षा युष्मास्ववस्थिता ॥ २८ ॥**

28. Therefore speak out, my dear children *(vatsa),* come in a body; what do you pray for from here (me)? For the creation (of the universe) rests in me, while the protection of the worlds rests with you.

**तदिति** ॥ तत्तस्मात्कारणात् हे वत्साः पुत्रकाः, 'वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सं तु वक्षसि' इति विश्वः। स्वयं पितामहत्वाद्वत्सा इत्यामन्त्रयते। संभूयागताः समागता इतो मत्तः किं प्रार्थयध्वम्। किमिच्छतेत्यर्थः। ब्रूत। लोकरक्षणे यूयमेव कर्तार इत्याह— मयि लोकानां सृष्टिः हि। रक्षा युष्मास्ववस्थिता। अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥

---

१. न खलु स्थ बलोत्तरैः. २ प्रार्थयध्वे. ३ भूतानाम्.

ततो मन्दानिलोद्धूतकमलाकरशोभिना
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २९ ॥

29 Then by his thousand eyes looking splendid *(shobhi)* like a group of lotuses waved by a gentle breeze, Vasava (Indra) urged the preceptor (Brihaspati, to speak).

**तत इति** ॥ ततो भगवत्प्रश्नानन्तरं वासव इन्द्रो गुरुं बृहस्पतिम् । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास । सहस्रग्रहणमास्थातिशयार्थम् । अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम्
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥

30. That Vachaspati (lord of speech), the eye of Indra, two-eyed (and yet) superior to Indra's thousand eyes, said this to Jalajasana (i.e. Brahma, the lotus-throned), with folded hands.

**स इति** ॥ हरेरिन्द्रस्य । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः । सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकम् । तदगोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य तद्द्विनेत्रम् । प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः । चक्षुश्चक्षुर्भूतः । चक्षुष्ट्वारोपस्य प्रकृतोपयोगात्परिणामालंकारः । स वाचस्पतिः । कस्कादित्वादलुक्सत्वे । 'षष्ठ्याः पतिपुत्र--' इत्यादिना सत्वमिति स्वामी । तन्न, छन्दोविषयत्वात् । प्राञ्जलिः सन् । जलजासनं ब्रह्माणमिदमुवाच ॥

एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ ३१ ॥

31. It is indeed so, oh revered one; our position is attacked by enemies! Having your Self divided in every one, how, oh lord, will you not know it?

**एवमिति** ॥ हे भगवन् षड्गुणैश्वर्यसंपन्न, यदात्थ 'कृतव्यावृत्तयः परैः' ( २।२७ ) इति यद्ब्रवीषि । 'ब्रुवः पञ्चानाम्' इत्यादिनाहादेशः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । आहेति भूते णलन्तभ्रमवदिति । आहेत्युपलक्षणम् । तदेव सत्यम् । नोऽस्माकं पदमधिकारः परैः

---

१ चोदयामास; प्रेरयामास. २ वृत्रहा. ३ द्विनेत्रः. ४ दशचक्षुःशताधिकम्. ५ यथा. ६ ज्ञास्यति प्रभुः.

शत्रुभिरामृष्टमाक्षिप्तम् । हे प्रभो, प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः । सर्वान्तर्यामीत्यर्थः । कथं न ज्ञास्यसि न वेत्सि । वर्तमानेऽपि वचभनङ्ग्या भविष्यन्निर्देशः प्रसिद्धः । 'अपह्नवे ज्ञः' 'अकर्मकाच' इत्यात्मनेपदविकल्पः ॥

उक्तमेव प्रपञ्चयति—

**भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।**
**उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥**

32. A great Asura (demon) by name Taraka, (who has become) puffed up by a boon obtained from you, has risen up like a comet for the oppression *(upaplava)* of the worlds.

**भवदिति** ॥ भवतस्त्वत्तो लब्धेन वरेणोदीर्ग उद्धतः तारक इत्याख्या नामधेयं यस्य स तारकाख्यः । महानसुरो महासुरः । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः । धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवायोपद्रवायोत्थित उत्पन्नः ॥

**पुरे तावन्तमेवास्य तनोति[2] रविरातपम् ।**
**दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥**

33. In his city the sun spreads that much sunshine only, by which measure *(matra)* the blooming *(unmesha)* of the lotuses in the oblong wells *(dirghika)* is brought about.

**पुर इति** ॥ अस्य तारकस्य पुरे रविः सूर्यस्तावन्तं तावन्मात्रमेवातपं तनोति । यावन्मात्रेण यावतैव । यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा । अल्पपरिमाणेनेत्यर्थः । 'मात्रा परिच्छदे । अल्पे च परिमाणे सा मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः । दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विकासः साध्यते निष्पाद्यते । कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशत इत्यभिप्रायः ॥

**सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।**
**नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥**

34. The Moon waits upon him with all her digits, at all times; (Taraka) does not seize only that digit which is made into a crest-jewel by Hara (Shiva).

**सर्वाभिरिति** ॥ चन्द्रस्तं तारकं सर्वदा । कृष्णपक्षेऽपीत्यर्थः । सर्वाभिः कलाभिर्निषेवते । 'कला तु षोडशो भागः' इत्यमरः । केवलां हरचूडामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥

**व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।**
**न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥**

---

१ त्वया दत्त; भवद्दत्त. २ करोति.

35. With his movements restricted in the garden, through fear of his stealing the flowers, the wind does not blow near him (at a rate) greater than that of a (palmyra) fan.

**व्यावृत्तेति** ॥ वायुः स्तेनस्य भावः कर्म वा स्तेयं चौर्यम् । 'स्तेनाद्यन्नलोपश्च' इति यत्प्रत्ययो नलोपश्च । कुसुमानां स्तेयं तस्मात्स्तेयाभियोगाद्दण्डाद्वा साध्वसं भयं तस्माद्धेतोरुद्याने व्यावृत्तगतिः । निवृत्तोद्यानसंचारः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । तत्पार्श्वे तत्समीपे । तालस्य वृन्तैरुह्यते । तालस्यैव वृन्तमस्येति तालवृन्तं तस्यानिलाद्व्यजनसंचारपवनादधिकं यथा तथा न वाति । 'व्यजनं तालवृन्तकम्' इत्यमरः ॥

**पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।**
**उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥**

36. Having given service by rotation, the seasons, diligent *(tatpara)* in providing flowers, wait upon him *(samanya)* like a gardener.

**पर्यायेति** ॥ ऋतवः षड्वसन्तादयः पर्यायसेवां क्रमसेवामुत्सृज्य पुष्पाणां संभारे संग्रहे तत्पराः । आसक्ताः सन्त इत्यर्थः । 'तत्परे प्रसितासक्तौ' इत्यमरः । उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकमुपासते सेवन्ते । शीतोष्णादिदोषप्रकाशनं तु दूरापास्तमित्यर्थः ॥

**तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।**
**कथमप्यम्भसामन्तराऽऽनिष्पत्तेः प्रतीक्षते ॥ ३७ ॥**

37. The sea (lit. lord of rivers) somehow till their ripening *(nishpatti)* inside waters waits for the jewels fit (to be his) presents.

**तस्येति** ॥ सरितां पतिः समुद्रस्तस्य तारकस्योपायनानां प्राभृतानां योग्यानि । 'प्राभृतं तु प्रदेशनम् । उपायनम्' इत्यमरः । रत्नान्यम्भसामन्तरा निष्पत्तेः । परिपाकपर्यन्तम् । विकल्पादसमासः । कथमपि महता यत्नेन प्रतीक्षते । कदा वा परिपच्येरन्नित्यैकाग्र्येण पालयतीत्यर्थः ॥

**ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।**
**स्थिरप्रदीपतामेत्य भुजंगाः पर्युपासते ॥ ३८ ॥**

---

१ प्रहिताः.

38. Having rays of light *(shikha)* of glowing jewels serpents with Vasuki as (their) leader, serve (him) at night after reaching the state of steady lamps.

**ज्वलदिति** ॥ किंचेति चार्थः । ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ज्वाला येषां ते वासुकिप्रमुखा भुजंगाः सर्पाः । सिद्धाश्च ध्वन्यन्ते । 'भुजंगः सिद्धसर्पयोः' इत्यमरः । निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्यैनं तारकं पर्युपासते परिवृत्य सेवन्ते ॥

**तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः।**
**अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥ ३९ ॥**

39. Awaiting favours done by him, even Indra conciliates him by (gifts of) flowers (lit. decorations or ornaments) of the trees of paradise, again and again conveyed (lit. caused to be carried, by his messengers.

**तत्कृतेति** ॥ इन्द्रोऽपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षत इति तथोक्तः सन् । मुहुर्दूतहारितैर्दूतप्रापितैः कल्पद्रुमाणां विभूषणैः । तत्प्रसूनैरित्यर्थः । तं तारकमनुकूलयत्यनुकूलं करोति ॥

**इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।**
**शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ ४० ॥**

40. Though being thus propitiated he (Taraka) molests the three worlds; a villain may become quiet by retaliation (and) not by obligations (or kindness).

**इत्थमिति** ॥ इत्थमुक्तप्रकारेण रविशशिपवनोदधिभुजंगसुरेन्द्रैराराध्यमानोऽपि भुवनत्रयं क्लिश्नाति पीडयति । तथा हि । दुर्जनः प्रत्यपकारेण प्रतीकारेणैव शाम्येच्छान्तो भवेत् । उपकारेण न शाम्येत् । प्रत्युत प्रकुप्यतीति भावः ॥

**तेनामरवधूहस्तैः सदयालूनपल्लवाः ।**
**अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥**

41. By him the trees in the Nandana garden, whose leaves used to be kindly plucked by the hands of the wives of Gods, were made to know (i.e. experience) cutting and falling.

**तेनेति** ॥ तेन तारकेणामरवधूहस्तैः ॥ सुकुमारैरिति भावः । तैरपि सदयमालूना अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः । छेदाश्च पाताश्च छेदपातास्तेषाम् । अभिजानन्तीत्यभिज्ञाः । कृद्योगात्कर्मणि षष्ठी । क्रियन्ते ।

---

१ प्रत्यहम्. २ स्वर्गद्रुम. ३ प्रत्युपकारेण. ४ हस्तसदया.

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां बाष्पसीकरवर्षिभिः ॥ ४२ ॥

42. He, while fast asleep, is indeed fanned with the choweries of the captive wives of Gods, showering the sprays of tears and by winds mixed with their breaths.

**वीज्यत इति** ॥ हि यस्मात्कारणात्स तारकः संसुप्तः सन् । श्वाससाधारणो निश्वाससमानोऽनिलो येषां तैः । ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः । बाष्पसीकरवर्षिभिः । तासां स्त्रीणां रोदनस्यायमवसर इति भावः । सुरबन्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः । ' प्रग्रहोपग्रहौ बन्द्याम् ' इत्यमरः । चामरैर्वीज्यते ॥

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

43. Having torn out the peaks of the Meru, which were trampled upon by the hoofs of (Sun's) horses, he has made (them into) mountains with pleasure gardens *(akrida)* in his own mansions.

**उत्पाट्येति** ॥ तेन तारकेण हरितां सूर्याश्वानाम् । ' हरित्सूर्ये च सूर्याश्वे वर्गे च हरिते दिशि ' इति विश्वः । खुरैः शफैः क्षुण्णानि चूर्णितानि । एतेन तेषामत्यौन्नत्यं सूचितम् । मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मस्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः । आक्रीडन्त एष्विल्याक्रीडाः । ते च ते पर्वताः कल्पिताः कृताः ॥

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥ ४४ ॥

44. Of the Mandakini (heavenly Ganges) water turbid with the rut of the quarter-elephants only remains! His reservoirs of water are now the place of the produce *(sasya)* of golden lotuses.

**मन्दाकिन्या इति** ॥ सांप्रतं संप्रति मन्दाकिन्या भागीरथ्या दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयो जलमेव । शिष्यत इति शेषं शिष्टम् । कर्मण्यण्प्रत्ययः । ' त्रिष्वन्यत्रोपयुज्यते ' इति नपुंसकत्वम् । तर्हि कनककमलानि क्व गतानीत्याह—हेमेति । हेमाम्भोरुहाण्येव सस्यानि तेषां तु तस्य वाप्यस्तद्वाप्य. एव धाम स्थानम् । सर्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥ ४५ ॥

45. The pleasure of seeing the worlds is (now) not enjoyed by the dwellers of heaven, as the way of their aerial cars has become impassable (left unfrequented- *khilibhuta)* through fear of his attack (apata).

**भुवनेति** ॥ तस्य तारकस्यापातात्समापत्तेर्भयाद्विमानानां पथि खिलीभूते अप्रहतीभूते सति। 'द्वे खिलाप्रहते समे इत्यमरः। स्वर्गिभिर्देवैर्भुवनानामालोकने प्रीतिर्नानुभूयते ॥

**यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः।**
**जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥ ४६ ॥**

46. At the sacrifices (which have been) performed, he, the treacherous person *(mayin)*, (even) while we are looking on, snatches away from the mouth of fire (Jataveda) the offering given by the (scrupulous) sacrificers *(yajvan)*.

**यज्वभिरिति** ॥ यज्वभिर्विधिवदिष्टवद्भिः। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः। विततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविर्मायी मायावी। व्रीह्यादित्वादिनिप्रत्ययः। स तारको नोऽस्माकं मिषतां पश्यताम्। पश्यत्सु सत्स्वित्यर्थः। 'षष्ठी चानादरे' इति षष्ठी। जातवेदा वह्निरेव मुखं तस्माज्जातवेदोमुखादाच्छिनत्ति। आक्षिप्य गृह्णातीत्यर्थः।

**उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च।**
**देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥**

47. He has seized the excellent horse, the famous *(uchchais)*, Uchchaishravas, as it were the embodied fame of Indra acquired during a long (period of) time.

**उच्चैरिति** ॥ किंचेति चार्थः। तेन तारकेणोच्चैरुन्नत उच्चैःश्रवा नाम हयो रत्नमिव हयरत्नमश्वश्रेष्ठः। 'रत्नं श्रेष्ठे मणावपि' इति विश्वः। अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम्। मूर्तिमदित्यर्थः। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। चिरकालार्जितमिन्द्रस्य यश इवाहार्यपहृतम् ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

**तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः।**
**वीर्यवन्त्यौषधानीव विकारे सांनिपातिके ॥ ४८ ॥**

---

१ पिबताम्.

48. All our stratagems *(upaya)* have been resisted in their action *(Pratihatakriya)* against him, the cruel one, like powerful medicinal herbs in the disease *(vikara)* having a derangement of the three bodily humours *(samnipatika)*.

**तस्मिन्निति** ॥ क्रूरे घातुके । 'नृशंसो घातुकः क्रूरः' इत्यमरः । तस्मिन्नसुरे नोऽस्माकं सर्वे उपायाः संनिपातदोषत्रयस्य प्रकोपजे सांनिपातिके विकारे ज्वरादौ । 'संनिपाताच्च' इति वक्तव्याट्ठक् । वीर्यवन्ति सारवन्त्यौषधानीव प्रतिहतक्रिया विफलप्रयोगा भवन्ति ॥

तदेव प्रतिहतक्रियत्वमाह—

**जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।**
**हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ४९ ॥**

49. By that Hari's disc burst into rays on impact (or reaction), where our hope of victory (was pinned), a golden ornament *(nishka)* was as it were placed on his neck.

**जयाशेति** ॥ किंचेति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रेऽस्माकं जयाशा विजयाशंसा । आसीदिति शेषः । प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेनास्य तारकस्य कण्ठे निष्कमुरोभूषणमर्पितमिवेत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितमित्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥

**तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।**
**अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥ ५० ॥**

50. His elephants, who have vanquished Airavata, now practise (the exercise) of butting against slopes of the clouds viz. Pushkara, Avartaka and others.

**तदीया इति** ॥ अद्य संप्रति निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य तारकस्येमे तदीया गजाः पुष्कराश्चावर्तकाश्च नामादयो येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीडामभ्यस्यन्ति ॥

**तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।**
**कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥**

---

१ निष्कः. २ अर्पितः. ३ तटाघातान्.

51. Therefore, oh Lord, we desire to create a general *(senani)* for his destruction *(shanti)* like the aspirants for liberation (mumukshu) (who desire to create) religious merit *(Dharma)* for cutting the bondage of action of this wordly life *(bhava)*.

**तदिति** ॥ तत्तस्मात्कारणात्। हे विभो स्वामिन्, मोक्तुं भवं त्यक्तुमिच्छवो मुमुक्षवो विरक्ता भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धस्तं छिनत्तीति कर्मबन्धच्छित्तं धर्ममिव। आत्मज्ञानहेतुभूतमिति शेषः। 'तमेव विदित्वातिमृत्युमेति' इति ज्ञानादेव मुक्तिः। तस्य तारकस्य शान्तये नाशाय। सेनां नयतीति सेनानीश्चमूपतिः। 'सत्सूद्विष-' इत्यादिना क्विप्। तं सेनान्यं कंचित्स्रष्टुमिच्छामः। वयमिति शेषः॥

सेनानीसृष्टेः फलमाह—

**गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित्।**
**प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम्॥ ५२॥**

52. Making whom the leader protecting the forces of gods, Gotrabhit (Indra, the clipper of mountains) will bring back from the enemies the goddess of victory (or, glory of victory) like a female prisoner."

**गोप्तारमिति** ॥ सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय। 'पुरोऽव्ययम्' इति गतित्वात् 'नमस्पुरसोर्गत्योः' इति सकारः। गां पृथ्वीं त्रायन्त इति गोत्रास्तान्भिनत्तीति गोत्रभिदिन्द्रो जयश्रियं बन्दीमिव बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात्प्रत्यानेष्यति प्रत्याहरिष्यति। तं स्रष्टुमिति पूर्वेण संबन्धः॥

**वचस्यवसिते[1] तस्मिन्[2]ससर्ज गिरमात्मभूः।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा[3]॥ ५३॥**

53. When those words came to an end *(avasita)* Atmabhu (the self-born Brahman) then delivered (his) speech. It excelled (lit. conquered) the post-thunder shower by its charm.

**वचसीति** ॥ तस्मिन्वार्हस्पत्ये वचस्यवसिते परिसमाप्ते सत्यात्मभूर्ब्रह्मा गिरं वाचं ससर्ज। जगादेत्यर्थः। सा गीः सौभाग्येन मनोहरत्वेन। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। गर्जितादृर्जितस्य वानन्तरां प्रवृत्तां वृष्टिं जिगाय जितवती। गर्जितपरत्वाद्वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः॥

---

१ उपरते. २ तस्य. ३ या.

**संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।**
**न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ५४ ॥**

54. "This desire of yours will be fulfilled; wait for some time. But in the accomplishment of this (object) I shall not myself undertake the work *(vyapara)* of creation.

**संपत्स्यत इति** ॥ अयं वो युष्माकं कामो मनोरथः सेनानीरूपः संपत्स्यते सेत्स्यति । कश्चित्कियानपि कालः प्रतीक्ष्यताम् । तु किंतु तस्य सेनान्यः सिद्धौ विषय आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि । नाहं स्रक्ष्यामीत्यर्थः ॥

कुत इत्याशङ्क्याह—

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ ५५ ॥**

55. That demon who obtained his glory from here (i.e. myself) does not deserve to be annihilated from here (i.e. by me) itself. It is improper *(asampratam)* personally to cut down even a poisonous tree after having reared it.

**इत इति** ॥ इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त एव क्षयं नाशं नार्हति । तथाहि । अन्यो वृक्षस्तावदास्ताम् । विषस्य वृक्षो विषवृक्षोऽपि संवर्ध्य कुतश्चित्कारणात्सम्यग्वर्धयित्वा स्वयं छेत्तुमसांप्रतमनर्हः । असांप्रतमित्यनेन निपातेनाभिहितत्वाद्वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न विभक्तिः परिगणनस्य प्रायिकत्वात्' इति ॥

**वृतं[2] तेनेदमेव प्राक्[3] मया चास्मै प्रतिश्रुतम् ।**
**वरेण शमितं[4] लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥**

56. He chose this very (thing) formerly and it was promised to him by me. By the boon was stopped *(shamita)* his penance competent to burn the worlds.

**वृत्तमिति** ॥ प्राक्पूर्वं तेनासुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । मया चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति संप्रदानत्वाच्चतुर्थी । कर्तव्यं चैतदित्याह—लोकान्दग्धुमलं शक्तम् । 'पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः । तस्य तपस्तत्तपो वरेण वरदानेन शमितं हि । मयेति शेषः ॥

**संयुगे सांयुगीनं तमुद्यतं[5] प्रसहेत कः ।**
**अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥**

---

१ सिध्यै. २ वृतः. ३ अहम्; आदौ. ४ अशमितम्. ५ उद्यन्तम्; युध्यन्तम्.

57. In battle (*samyuga*) who could withstand him, a great warrior (*samyugina,* a soldier skilled in war) ready (for war) except the portion of the injected semen of Nilalohita (Shiva)?

**संयुग इति** ॥ संयुगे युद्ध उद्यतं व्याप्रियमाणम् । संयुगे साधुं सांयुगीनम् । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः । तं तारकं निषिक्तस्य क्वचित्क्षेत्रे क्षरितस्य । 'नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित' इति पुराणम् इति स्वामी । तस्य नीललोहितस्य धूर्जटे रेतसः शुक्रस्यांशादृतेंऽशं विनान्यः कः प्रसहेताभिभवेत् । 'प्रसहनमभिभवः' इति वृत्तिकारः ॥

कथमसावीदृक्शक्तिरित्याह —

**स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्[५] ।**
**परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥**

58. For that god is the highest (param) Light (of Brahman), fixed beyond darkness: the magnitude (or extent—*riddhi)* of his power cannot be accurately measured by me or by Vishnu.

**स इति** ॥ स देवो नीललोहितस्तमसः पारे परतो व्यवस्थितं तमोगुणातीतं परं ज्योतिः परमात्मा हि । अतएव मया परिच्छिन्नप्रभावर्द्धिरवगाढमहिमातिशयो न भवति । तथा विष्णुना च न । अतस्तस्यासाध्यं नास्तीत्यर्थः ॥

संप्रति तदंशोत्पत्तावुपायं दर्शयति—

**उमारूपेण ते यूयं संयमस्तिमितं मनः ।**
**शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥**

59. Thus placed *(te)* you try to attract Shambhu's ironlike mind, steadied by his *samyama* (concentration of mind — a name for the last three stages of Yoga) through the magnet (ayaskanta) which attracts iron in the form of the beauty of Uma.

**उमेति** ॥ ते कार्यार्थिनो यूयं संयमस्तिमितं समाधिनिश्चलं शंभोर्मन उमारूपेणोमासौन्दर्येण । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः । अयस्कान्तेन मणिविशेषेण । 'कस्कादिषु च' इति सकारः । लोहवदयोधातुमिव । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययो मृग्यः । आक्रष्टुमाहर्तुं यतध्वमुद्युक्ता भवत ॥

---

५ प्रतिष्ठितम्.

नच गत्यन्तरमस्तीत्याह--

**उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।**
**सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥**

60. The two are able to bear the semen *(bija)* deposited by us two — she (Uma) (that) of Shiva and his watery form, that of mine.

**उभे इति** ॥ उभयोः शंभोर्मम चाहितं निषिक्तं बीजं तेजो वोढुं सोढुं सा वोमा शंभोरष्टमूर्तेस्तस्येयं तदीया जलमयी मूर्तिर्वा मम । उभे एव क्षमे न तृतीयेत्यर्थः । वाशब्दो द्वन्द्वार्थे न त्वन्यार्थे । एतदेवोदाहृत्येत्थमेव व्याख्यातं गणव्याख्याने । अत्र दीपकालंकारः । प्राकरकणियोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्योश्चौपम्यस्य गम्यत्वात् । यथाह भोजराजः—' प्रस्तुतानामप्रस्तुतानां चौपम्यस्य गम्यत्वे दीपकम् ' इति । नचेयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥

**तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।**
**मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥**

61. The son of that Shitikantha (the blue-throated Shiva) having attained the position of your general *(sainapatyam)* will loosen the braids of captive wives of gods by the greatness *(vibhuti)* of his valour."

**तस्येति** ॥ तस्य शितिकण्ठस्याष्टमूर्तेरात्मा । पुत्र इत्यर्थः । 'आत्मा वै पुत्रनामासि इति श्रुतेः । वो युष्माकं सेनापतेर्भावः सैनापत्यम् । ' पत्यन्तपुरोहितादिभ्यो यक् ' इति यक्प्रत्ययः । उपेत्य प्राप्य वीर्यविभूतिभिः शौर्यसंपत्तिभिः सुरबन्दीनां वेणीर्मोक्ष्यते विस्रंसयिष्यति । तारकासुरं हनिष्यतीति भावः ॥

**इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।**
**मनस्याहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२ ॥**

62. Thus having spoken to the gods Vishvayoni (the origin of the Universe i.e. Brahma) disappeared. Those gods too fixing their duty in their mind (bearing in mind what they had to do) went to heaven.

**इतीति** ॥ विश्वस्य योनिः कारणम् । 'योनिः स्त्रीणां भगस्थाने कारणे तांत्रिके पणे ' इति वैजयन्ती । विबुधान्सुरानिति व्याहृत्याभिधाय तिरोदधेऽन्तर्हितवान् । ते देवा अपि मनस्याहितं कर्तव्यं यैस्ते तथोक्ताः सन्तो दिवं स्वर्गं ययुः प्रापुः ।

**तत्र निश्चित्य कंदर्पमगमत्पाकशासनः ।**
**मनसा कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥ ६३ ॥**

---

१ सोढुम्. २ सेनापत्यम्. ३ वेणीबन्धानदूषितान्. ४ प्रति. ५ कर्मसंसिद्धिः; कार्यसंसिद्धयै; कार्यसंसिद्धि.

63. There having decided Pakashasana (Indra, who punished the demon — Paka) went to Cupid by his mind with its speed doubled by the haste in the accomplishment of his task.

**तत्रेति** ॥ पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रस्तत्र हरचित्ताकर्षणकृत्ये कंदर्पं निश्चित्य। साधकत्वेनेति शेषः। कार्यसंसिद्धौ त्वरयौत्सुक्येन। द्वौ गुणौ यस्य तद्द्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन। 'गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। मनसागमत्। सस्मारेत्यर्थः। गमेर्लुङ्। लृदित्त्वाच्च्लेरङादेशः ॥

**अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं**
**रतिवलयपदाङ्के चापमासज्य कण्ठे।**
**सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः**
**शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥**

64. Then that Pushpadhanva (Cupid who has a bow of flowers) waited with folded hands on Shatamakha (Indra, the performer of a hundred sacrifices) after placing his bow, the ends of which were as pretty as the creeperlike eyebrows of a lovely woman, on his neck marked by the hands (lit, the places for the bracelets) of Rati, and having deposited his missile of the mango-sprouts *(chutankura)* in the hands of his companion, Madhu (i.e. Spring).

**अथेति** ॥ अथ स्मरणानन्तरम्। स स्मृत इत्यर्थः। पुष्पं धनुर्यस्य स पुष्पधन्वा कामः। 'वा संज्ञायाम्' इत्यानङ्। 'ललितं त्रिषु सुन्दरम्' इत्यमरः। ललितायाः सुन्दर्या योषितो भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं चापम्। रतिः स्मरप्रिया। 'रतिः स्मरप्रिया' इत्यमरः। तस्या वलयपदानि कङ्कणस्थानान्यङ्कश्चिह्नं यस्य स तथोक्ते कण्ठ आसज्य लगयित्वा। चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते। सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुरमेवास्त्रं यस्य स तथोक्तः प्राञ्जलिः कृताञ्जलिः सन्। शतमखमिन्द्रमुपतस्थे संगतवान्। संगतिकरणार्थादात्मनेपदम्। अत्र स्वभावोक्तिः—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति। मालिनीवृत्तमेतत्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः।

---

१ सुललित. २ शार्ङ्गम्. ३ पुष्पकेतुः

# कुमारसंभवम्

## THE BIRTH OF KUMAR

### तृतीयः सर्गः ।

*Canto III*

**तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात।**
**प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १॥**

1. The thousand eyes of Indra fell simultaneously on him, leaving the Gods (Tridasha); usually the consideration of the masters for (their) servants is fickle according to (their purpose.

**तस्मिन्निति** ॥ मघोन इन्द्रस्याक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान्देवान्। 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहिः। 'बहुव्रीहौ संख्येये-' इति डच्प्रत्ययः। उक्तार्थत्वात्सुचो निवृत्तिः। विहाय त्यक्त्वा तस्मिन्कामे युगपत्पपात। सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः। ननु सुचिरपरिचितानेकसुर-परित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन्पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति—प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषये गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम्। फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥

**स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः[1]।**
**भर्तुः प्रसादं प्रतिनन्द्य[2] मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २॥**

2. Being given a place near (his own) throne by Indra (Vasava), with the words, "Sit here", he, welcoming gladly the favour of the master with (his) head, started to address him thus, in secret:—

**स इति** ॥ स कामो वासवेनेन्द्रेणासनस्य संनिकृष्टं सिंहासनस्य संनिहितमासन-संनिकृष्टं यथा तथा। शेषषष्ठ्यायं समासः। कृद्योगलक्षणया तु न। 'न लोकाव्यय-निष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात्। इतो 'निषीदेहोपविशेति विसृष्टभूमिर्दत्तावकाशः सन्। भर्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रतिनन्द्य संभाव्य मिथो रहसि। 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः। एनमिन्द्रमेवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमतोपक्रान्तवान्। 'प्रोपाभ्यां समर्थाभ्यां' इत्यात्मनेपदम् ॥

---

१ निसृष्ट. २ प्रतिवन्द्य.

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ ३ ॥

3. Command, Oh you, knowing the specialities of men, what is to be done for you in the worlds? I desire (your) favour commencing with (your) remembrance (of me) to be increased by your command.

**आज्ञापयेति** ॥ हे पुंसां ज्ञातविशेष ज्ञातसार । ज्ञातपुंविशेषेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । आज्ञापय । तदिति शेषः । उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः । किं तदित्याह—लोकेषु ते तव यत्करणीयं कर्तव्यमस्ति । संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञया नियोगेन संवर्धितं वृद्धिं गमितमिच्छामि । संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्धय । कचित्कर्मणि नियुङ्क्ष्वेत्यर्थः । अन्यथा मे नास्ति परितोष इति भावः । तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः ॥

न च मे किंचिदसाध्यमस्तीत्याह—

केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥

4. By whom, desirous of your place, has jealousy been aroused in you by penances of excessively long duration, so much so *(Yavat)* that he will come within the command of this bow with an arrow fitted (to it)?

**केनेति** ॥ पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्तपोभिस्ते तवाभ्यसूयेर्ष्या जनिता । तं ब्रूहीति शेषः । किमर्थम् । यावद्यतः स भवद्वैर्याहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तत इति निदेशवर्त्याज्ञावशो भवति । अविलम्बेनैव भविष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।
बद्धश्चिरं तिष्ठतु सुन्दरीणामरेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥

5. Who, disapproved by you, has taken to the path of liberation, through fear of the tortures of rebirth? May he remain, forever, bound by the leers (sidelong glances) of beautiful ladies, charming on account of knitted eyebrows!

**असंमत इति** ॥ तवासंमतः कः पुनर्भवः पुनरुत्पत्तिः । संसार इति यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयान्मुक्तिमार्गं प्रपन्नस्तं वद । यतः

१ संवर्धितुम्. २ फलकाङ्क्षिणा. ३ आरोपित. ४ विलासैः.

सोऽप्यारेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु। आरेचितलक्षणं तु—'स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम्। तयोर्मूलसमुत्क्षेपं कौटिल्याकुञ्चिटिं विदुः ॥' इति ॥

धर्मार्थावधिकृत्याह—

**अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते[1]।**
**कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥**

6. Of what enemy of yours, though instructed in politics by Shukra (Ushanas, himself), shall I, appointing love as my spy, destroy the *Artha* (wealth) and *Dharma* (religious merit)?

**अध्यापितस्येति** ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि। अपिशब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते। 'मतिबुद्धि-' इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः। 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति वचनात्। ते द्विषस्तव शत्रोः कस्यार्थधर्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम्। 'प्रणिधिः प्रार्थने चरे' इति यादवः। प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव पीडयामि वद ॥

काममधिकृत्याह--

**कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम्।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७ ॥**

7. Which lady, having large and handsome hips, accustomed to the misery of the vow of perfect chastity, that has entered (your) fickle mind by her attractiveness, do you wish (to have) discard (her) shame, (and) throw (her) arms around (your) neck in voluntary embrace?

**कामिति** ॥ एकः पतिर्यस्याः सैकपत्नी पतिव्रता। 'नित्यं सपत्न्यादिषु' इति ङीप्। तस्या व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावाम्। दृढव्रतामित्यर्थः। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। चारुतया सुन्दरत्वेन हेतुना लोलं मनस्त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम्। स्वयं गृह्णातीति स्वयंग्राहा। 'विभाषा ग्रहः' इति णप्रत्ययः। न च जलचर एव ग्राह इति नियमः। जलचरे ग्राह एवेति नियमादिति। स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूतामिच्छसि। त्वदर्थे पतिव्रतामपि व्रताद्भ्रंशयिष्यामीत्यर्थः। एतच्चेन्द्रस्य पारदारिकत्वादुक्तम्। तथा च श्रुतिः--'अहल्यायै जारः' इति ॥

---

१ प्रणिधेः.

त्रिविधा नायिका स्वकीया परकीया साधारणी चेति। तत्र परकीयां प्रत्युक्तम्। इतरे प्रत्याह--

**कयासि कामिन्सुरतापराधात्पादानतः कोपनयावधूतः**
**यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥ ८ ॥**

8. By what irascible lady, oh lustful (Indra), are you humiliated, though fallen to (her) feet, on account of offence in sexual enjoyment whose body shall I make (afflicted) with deep remorse, with a bed of foliage as the (only) refuge?

**कयेति** ॥ हे कामिन्कामुक, सुरतापराधात्। अन्यासङ्गादिरित्यर्थः। पादानतः प्रणतः सन्। कोपनया कोपनशीलया कया स्त्रियावधूतस्तिरस्कृतोऽसि। तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमतएव प्रवालशय्याशरणं करिष्यामीति ॥

**प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः।**
**बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिधताराभ्यः ॥ ९ ॥**

9. Be pleased, oh hero; let (thy) thunderbolt rest; what enemy of Gods with the valour of (his) arms rendered futile, should be afraid of even women with their lower lips throbbing in passion *(kopa)*?

**प्रसीदेति** ॥ हे वीर, प्रसीद प्रसन्नो भव। वज्रं कुलिशं विश्राम्यतु। उदास्तामित्यर्थः। मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः कतमो दैत्यदानवादिषु यः कश्चन सुरारिः। 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति डतमच्प्रत्ययः। कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु। किमु वक्तव्यं पुंभ्य इत्यर्थः। सकृद्भीतः सर्वतो बिभेतीति भावः। 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥

**तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।**
**कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ १० ॥**

10. Through your favour, having obtained Spring alone as the single ally, shall I, though having weapons of (mere) flowers, bring about the fall of the fortitude of even Hara with the Pinaka (bow) in (his) hand; what (are) other archers to me?

**तवेति** ॥ किं बहुना, तव प्रसादादनुग्रहात्कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽप्यहमेकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य स पिनाकपाणिः। 'प्रहरणार्थेभ्यः

---

१ सहसापराधः.

परे निष्ठासप्तम्यौ'। तस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्यच्युतिं धैर्यहानिं कुर्याम् । कर्तुं शक्नुयामित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । अन्ये धन्विनो धनुर्भृतो मम के । न केऽपीत्यर्थः । किंशब्दः कुत्सायाम् । 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः ॥

अथोरुदेशादवतार्य पादमाक्रान्तिसंभावितपादपीठम् ।
संकल्पितार्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥ ११ ॥

11. Then, bringing down (his) foot from the thigh (lit. part of the thigh) thus honouring the footstool by stepping on it, Indra *(Akhandala)* said this to Cupid (Kama) who had revealed his prowess in (achieving) the intended object.

**अथेति** ॥ अथ स्मरवाक्यश्रवणान्तरमाखण्डलः सहस्राक्ष ऊरुदेशात्पादमाक्रान्त्या-क्रमणेन संभावितं पादपीठं यस्मिंस्तद्यथा तथावतार्य संकल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिम् । 'कुर्यां हरस्यापि-' ( ३ । १० ) इत्यादिना प्रकटीकृतस्वसा-मर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाषे ॥

सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ १२ ॥

12. Friend, all this is possible in you; both the thunderbolt and you are my weapons: the thunderbolt is blunt against those mighty with the power of penance; (while) you are (one) having access everywhere and also efficient.

**सर्वमिति** ॥ हे सखे । सखे इति संबोधनं गौरवार्थम् । सर्वमेतत्त्वय्युपपन्नं सिद्धम् । मम कुलिशं वज्रं भवांश्चोभे अस्त्रे । तत्र वज्रं तपोवीर्येण तपोबलेन महत्सु प्रतिबलेषु कुण्ठं प्रतिबद्धप्रसरम् । त्वमस्त्रं सर्वतोगामि च साधकं च । तापसेष्वप्यकुण्ठमित्यर्थः ॥

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

13. I know your strength; hence indeed I shall appoint you, (who are) equal to myself, to a momentous task; Shesha is ordered by Krishna to bear his body, on noting his ability to uphold the earth.

---

१ अक्रान्ति.   २ संकल्पितेऽर्थे.

**अवैमिति** ॥ हे सखे, ते सारं बलमवैमि वेद्मि। अतः खल्वत एवात्मसमं मत्तुल्यं त्वां गुरुणि महति कार्ये 'तस्मै हिमाद्रेः'— [ ३ । १६ ] इति वक्ष्यमाणे नियोक्ष्ये। 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकादात्मनेपदनियमः। तथाहि। सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—कृष्णेन विष्णुना धरतीति धरः। पचाद्यच्। भुवो धरो भूधरस्तस्य भावस्तत्तां भूधरताम्। भूधरणशक्तिमित्यर्थः। अवेक्ष्य ज्ञात्वा शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वोढुम्। 'क्रियार्थोपपदस्य-' इत्यादिना चतुर्थी। व्यादिश्यते नियुज्यते। शेषशायी हि भगवान्॥

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—

**आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम्।**
**निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव[1] ॥ १४ ॥**

14. By you announcing the course of your arrow against Shiva (lit. bull-bannered), our task is well nigh accomplished; know that at present, this itself is the desire of the enjoyers of portions in the sacrifices (Gods), whose enemies are powerful.

**आशंसतेति** ॥ वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता। 'कुर्यां हरस्यापि पिनाकपाणेः' ( ३ । १० ) इत्यादिनेति शेषः। त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम्। 'ईषदसमाप्तौ-' इत्यादिना कल्पप्प्रत्ययः। कथमेतदत आह—इदानीमुच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां देवानाम्। एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते। ईप्सितमाप्तुमिष्टमेतदेव हरे बाणप्रयोगरूपमेव निबोध। हरायत्तं बुध्यस्वेत्यर्थः। 'बुध बोधने' इति धातोर्लोट्। अत्र 'आशंसता प्रार्थयमानेन' इति नाथव्याख्यानमनाथव्याख्यानम्। आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात्। याच्ञार्थत्वस्याप्रामाणिकत्वात्। 'कुर्यां हरस्यापि--' ( ३ । १० ) इत्यत्रानयोरभावादयोगाच्चेति ॥

किं तत्कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह--

**अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः।**
**स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा[2] ॥ १५ ॥**

15. For, these Gods, for victory, wish for a general born of the semen of Shiva *(Bhava)*. And he who has touched his body with Mantras (Brahman or, of whom Brahma is the son, or who is the repository of the Vedas and their subsidiaries) and who has fixed his mind on Brahman is conquerable (only) by the discharge of your single arrow.

---

१ अर्थमंत्र. २ ब्रह्मनियोजितात्मा.

**अमी इति** ॥ हि यस्मादमी देवा जयाय शत्रुजयार्थं भवस्य हरस्य वीर्यप्रभवं तेजःसंभूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते । 'वश कान्तौ' इति धातोर्लट् । ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः । कृतमन्त्रन्यास इत्यर्थः । ब्रह्मणि निजतत्त्वे 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा' इत्युभयत्राप्यमरः । योजितात्मा नियमितचित्तः । मन्त्रन्यासपूर्वकं ब्रह्म ध्यायन्नित्यर्थः । स भवश्च त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः । अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥**

16. Endeavour to make the devout daughter of the Himalaya mountain agreeable to the self-restrained (Shiva). It has been specified by the self-born (Brahman) that she alone of all women is capable (of becoming) the receptacle for the effusion of his semen.

**तस्मा इति** ॥ यतात्मने नियतचित्ताय तस्मै भवाय । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्चतुर्थी । प्रयतां हिमाद्रेस्तनूजां पार्वतीं रोचयितुं यतस्व । भवितव्यं चात्र पार्वत्यैवेत्याह—योषित्सु स्त्रीषु मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । क्षमा शक्ता तस्य हरस्य वीर्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः क्षेत्रं सा पार्वत्येवेत्यात्मभुवा ब्रह्मणोपदिष्टम् । 'उभे एव क्षमे वोढुम्' ( २ । ६० ) इत्यादिनोक्तमित्यर्थः ॥

सापीदानीं संनिकृष्टैव तस्येत्याह--

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १७ ॥**

17. And (the rumour) that the daughter of the lord of mountains, at the injunction of her father, attends upon Shiva, practising penance on the high-land, is heard by me from the mouths of the divine ladies *(Apsarases)*; that class (acts as) my spy (espionage).

**गुरोरिति** ॥ नगेन्द्रकन्या पार्वती च गुरोः पितुर्नियोगाच्छासनादधित्यकायां हिमाद्रेरूर्ध्वभूमौ । 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । तपस्यन्तं तपश्चरन्तम् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः । ततः शतृप्रत्ययः । स्थाणुं रुद्रमन्वास्ते । उपास्त इत्यर्थः । इतीदं मयाप्सरसां

---

१ जितात्मने.

मुखेभ्यः श्रुतम् । न चैतदैतिह्यमात्रमित्याह—स वर्गः सोऽप्सरसां गणो मत्प्रणिधिर्मम गूढचरः । ' प्रणिधिः प्रार्थने चरे ' इति यादवः ॥

**तद्गच्छ सिध्द्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।**
**अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥**

18. Therefore go for success. Accomplish the task of the Gods. This object is attainable only through other means (i.e. Parvati); it stands in need of you, the best means, like the sprout of a seed (that expects) water before issuing out.

**तदिति** ॥ तत्तस्मात्सिध्द्यै कार्यसिद्ध्यर्थं गच्छ देवकार्यं कुरु । आशिषि लोट् । अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव । तच्च कारणान्तरं पार्वतीसंनिधानमिति भावः । ' अर्थः प्रकारे विषये वित्तकारणवस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने ॥ ' इति विश्वः । तथापि बीजसाध्योऽङ्कुरो बीजाङ्कुर उदयादुत्पत्तेः प्रागम्भ इव त्वामुत्तमं प्रत्ययं कारणमपेक्षते ।

' प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः ॥

**तस्मिन्सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १९ ॥**

19. Against him (who is) the means of the victory to the Gods, possibly there is scope for your weapon alone; you are competent. For, a deed not common to anyone else, though not renowned (can) alone (conduce) to the success of men.

**तस्मिन्निति** ॥ सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन्हरेऽस्त्रगतिरस्त्रप्रसरस्तवैव नाम । नामेति संभावनायाम् । अन्येषां तु संभावनापि नास्तीति भावः । अतस्त्वं कृती कृतमस्यास्तीति कृती कृतार्थः । तथा हि । अप्रसिद्धमप्यनन्यसाधारणमेव कर्म पुंसां यशसे हि । इदं तु प्रसिद्धमसाधारणं चेत्यतियशस्करमिति भावः ॥

प्रोत्साहनार्थं स्तौति—

**सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।**
**चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ २० ॥**

---

१ प्रत्ययसङ्गलब्धौ. २ अस्मिन् ३ काम.

20. The Gods are entreating *(Samabhyarthayitarah)*, the task is of all the three worlds *(Vishtapa)*; the work (can be done) only by your arrow and (is) not very injurious; indeed you have covetable prowess.

**सुरा इति** ॥ एते सुराः समभ्यर्थयितारो याचितारः । कार्यं प्रयोजनं त्रयाणां विष्टपानामपि संबन्धि । सर्वलोकार्थमित्यर्थः । कर्म ते तव चापेन । न त्वन्येनेति भावः । अतिहिंस्रमतिघातुकं च न । अहो वत इति संबोधने । 'अहो बतानुकम्पायां खेदे संबोधनेऽपि च' इति विश्वः । अथवा अहो आश्चर्ये । बतेत्यामन्त्रणे संतोषे चेति । 'बतामन्त्रणसंतोषखेदानुक्रोशविस्मये' इति विश्वः । स्पृहणीयवीर्योऽस्याश्चर्यविक्रमोऽसि । 'आश्चर्यं स्पृहणीयं च' इति नानार्थकोशः ॥

**मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव ।**
**समीरणो[1] नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥ २१॥**

21. And, oh Cupid, this Spring, on account of association (with you), is your help-mate even without saying. By whom is the wind ordered in the words: "Be the propellor of fire"?

**मधुरिति** ॥ हे मन्मथ, असौ मधुश्च वसन्तोऽपि ते साहचर्यात्सहचरत्वादेवानुक्तोऽप्यप्रेरितोऽपि सहायः सहकार्येव । तथाहि । समीरणो वायुर्हुताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते । अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः । स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथङ्निर्दिष्ट इति प्रतिवस्तूपमालंकारोऽयम् । तदुक्तम्—'यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि । गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता ॥' इति ॥

**तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।**
**ऐरावतास्फालनकर्कशेन[2] हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥**

22. Cupid, having accepted by (his) head the order of the master, like the remains (of flowers of worship: Shesha), with the words, "Alright", started; with his hand hard on account of striking against Airavata, Indra touched his (Madana's body).

**तथेति** ॥ तथास्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव । 'प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः । 'माल्याक्षतादिदाने स्त्री शेषा' इति वैजयन्ती-केशवौ । आज्ञां मूर्ध्नादाय शिरसा गृहीत्वा मदनः प्रतस्थे । 'समवप्रविभ्यः

१ समीरणश्चोदयिता; समीरणः प्रेरयिता. २ दिग्वारणा.

स्थः' इत्यात्मनेपदम् । इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श । हस्तस्पर्शेन संभावयामासेत्यर्थः । 'शेषामिवाज्ञाम्' इत्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः संदेहसंकर इति । यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा । अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता । शेषादानं तु संदिग्धमिति ॥

**स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।**
**अङ्गव्ययप्रार्थितकार्यसिद्धिः[1] स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥**

23. He, desirous of success in the task (even) at the cost of the body, went to the hermitage of Shiva (Sthanu), on the Himalaya, followed apprehensively by (his) esteemed friend Spring and Rati.

**स इति** ॥ स मदनोऽभिमतेन प्रियेग सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं संकटमापतितमिति सभयमनुप्रयातः सन् । तथाङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः । शीर्त्वा मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः । हैमवतं हिमवति भवं स्थाणो रुद्रस्याश्रमं जगाम ॥

**तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती ।**
**संकल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥**

24. In the forest, acting contrary to concentration in penance of the restrained ascetics, Spring made himself manifest, assuming his own form, an object of pride to the Wish-born (Cupid).

**तस्मिन्निति** ॥ तस्मिन्वने स्थाण्वाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति प्रतिकूलवर्ती विरोधी मधुर्वसन्तः संकल्पयोनेर्मनोभवस्याभिमानभूतम् । गर्वहेतुभूतमित्यर्थः । कार्यकारणयोरभेदोपचारः । आत्मानं निजं स्वरूपमाधाय संनिधाय जजृम्भे प्रादुर्बभूव । वसन्तधर्मान्प्रवर्तयामासेत्यर्थः ॥

वसन्तधर्मानाह—

**कुबेरगुप्तां[2] दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।**
**दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥**

25. While the hot-rayed (Sun), disregarding the season, started to go to the direction protected by Kubera (North), the Southern direction, through her mouth sent forth a breeze, like a sigh of grief.

---

१ कर्मसिद्धिः. २ जुष्टाम्.

**कुबेरेति** ॥ उष्णरश्मौ सूर्ये साहसिके च नायके समयं दक्षिणायनकालं संगमकालं च विलङ्घयाकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षितां च। दिशमुदीचीं स्त्रीलिङ्गाक्षिप्तां कांचिन्नायिकां च। गन्तुं चलितुं संगन्तुं च प्रवृत्ते सति दक्षिणा दिग्दाक्षिण्यवती नायिका च मुखेनाग्रभागेन वक्त्रेण च। वहतीति वहः। पचाद्यच्। गन्धस्य वहं गन्धवहमनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव 'दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवस्तुनोः' इति वैजयन्ती। उत्ससर्ज प्रवर्तयामास। स्वभर्तरि समयोल्लङ्घनेन पराङ्गनासंगतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिंचिद्वदा दुःखान्निश्वसन्तीति भावः। उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः। अत्रोत्प्रेक्षालंकारः। न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम्। केवलविशेषण-सामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते। अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। न च श्लेष एव प्रकृताप्रकृतविषयः, उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्। तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः। स च व्यलीकनिश्वासरूपचेतनधर्मसंभावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन्नभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युत्पश्यामः ॥

**असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि।**
**पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २६ ॥**

26. Presently, Ashoka put forth flowers together with foliage even from the stem; he did not wait for contact with the foot of beautiful ladies, jingling with anklets.

**असूतेति** ॥ अशोको वृक्षविशेषः। सद्यः स्कन्धात्प्रकाण्डात्प्रभृत्येव। स्कन्धादारभ्येत्यर्थः। भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः। भाष्यं च 'मूलात्प्रभृत्यग्राद्वृक्षांस्तक्ष्णुवन्ति' इति 'कार्तिक्याः प्रभृत्याग्रहायणी मासे' इत्यादि। सपल्लवानि कुसुमान्यसूत। उभयमप्यजीजनदित्यर्थः। आसिञ्जितो नूपुरो यस्य तेन। सिन्जधातोः 'अकर्मक-' इत्यादिना कर्तरि क्तः। सुन्दरीणां पादेन संपर्कं ताडनं नापैक्षत। 'सनूपुररवेण स्त्रीचरणेनाभिताडनम्। दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् ॥' इति। तथाहि—'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः। आलोकितः कुरबकः कुरुते विकासमालोडितस्तिलक उत्कलिको विभाति ॥' इति ॥

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे।**
**निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

27. Forthwith on the arrow of fresh mango-blossom, with charming feathers of sprouts of foliage, that was finished, spring placed bees, like the letters of the name of the Min-born (Madana).

**सद्य इति** ॥ मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन्। 'पत्रं वाहनपक्षयोः' इत्यमरः। नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यो मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान्भ्रमरान्निवेशयामास निदधौ। अत्र प्रवालपत्र इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वरूपं यन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥**

28. In spite of the existence of excellence of colours, the Karnikara flowers hurts the mind by want of smell. Generally the tendency of the Creator of the universe is averse to producing a totality of merits.

**वर्णेति** ॥ कर्णिकारं कर्णिकारकुसुमम्। 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्युत्पन्नस्य तद्धितस्य 'पुष्पमूलेषु बहुलम्' इति लुक्। एवमन्यत्रापि द्रष्टव्यम्। वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्यतापयत्। 'लट् स्मे' इति भूतार्थे लट्। तथाहि। प्रायेण विश्वसृजो विधातुः प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसंपादनविषये पराङ्मुखी। सर्वत्रापि वस्तुनि किंचिद्वैकल्यं संपादयति। यथा चन्द्रे कलङ्कः। अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥

**बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्[1] ॥ २९ ॥**

29. The extremely red Palasha buds, curved like the new Moon (and) being unbloomed, appeared like the nail-wounds on the woodland recently united with Spring.

**बालेन्द्विति** ॥ अविकासभावान्निर्विकासत्वान्मुकुलभावाद्धेतोर्बालेन्दुरिव वक्राण्यतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि। 'पलाशे किंशुकः पर्णः' इत्यमरः। वसन्तेन पुंसा समागतानां संगतानां वनस्थलीनां स्त्रीणां सद्यः सद्यो दत्तानि। पुराणेष्वतिलौहित्याभावादिति भावः। नखक्षतानीव बभुः। अत्र वसन्तस्य वनस्थलीनां च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति। 'नखक्षतानीव' इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति। सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालतैव। 'विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यते' इति हि लक्षणम् ॥

---

१ निर्गन्धमिति.

लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य।
रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ ३० ॥

30. The beauty of Spring, having exhibited the mark (Tilaka flower), variegated *(Chitra)* on account of the embellishment (*bhakti*) of black collyrium in the form of clinging bees, decorated her lip in the form of the mango-foliage, with red colour charming (delicate) like early dawn.

**लग्नेति** ॥ मधुश्रीर्वसन्तलक्ष्मीर्लग्नद्विरेफा एवाञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं तिलकं पुष्पविशेषमेव तिलकं विशेषकम्। मुखं प्रारम्भस्तस्मिन्नेव मुखे वक्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रागेणारुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालोष्ठमलंचकार प्रसाधयामास। अत्र रूपकालंकारः ॥

मृगाः प्रियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः।
मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥

31. Beasts drunk with passion, with the casting of (their) glances obscured by the particles of dust from bunches of flowers of *Priyala* trees, wandered against the winds, in the forestland where the falling off of leaves caused rustling sound.

**मृगा इति** ॥ प्रियालद्रुमा राजादनवृक्षाः। 'राजादनः प्रियालः स्यात्' इत्यमरः। तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः संजातविघ्ना दृष्टीनां पाताः प्रसादा येषां ते तथोक्ताः मदोद्धता मृगाः प्रत्यनिलमनिलाभिमुखं मर्मरा मर्मरशब्दवन्तः पत्रमोक्षा जीर्णपर्णपातयासु ता वनस्थलीर्विचेरुर्वनप्रदेशेषु चरन्ति स्म। 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति चरतेः सकर्मकत्वम् ॥

चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ ३२ ॥

32. What the male cuckoo cooed sweetly, with his throat dark-red (hence sweet-kahsaya) on account of the tasting of mango-sprouts, that same became the word of Cupid expert in humiliating the pride of high-minded (proud) ladies.

**चूताङ्कुरेति** ॥ चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः। 'रसभावपथे रक्ते कषायः' इति केशवः। पुमान्कोकिलः पुंस्कोकिलः। पुंग्रहणं प्रागल्भ्यद्योतनार्थम्।

---

१ निवेश्य. २ प्रियालु. पियाल.

मधुरं चुकूजेति यत्तत्कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं मानं त्यजतेत्याज्ञावचनं जातम् । कोकिलकूजितश्रवणानन्तरं स्मराज्ञप्ता इव मानं जहुरित्यर्थः ॥

**हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम् ।**
**स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥**

33. The rise of sweat of the *Kimpurusha* women whose lips were bright through the departure of winter (and) whose complexion *(mukhachhavi)* had become slightly pale, set foot over the leaf-paintings.

**हिमेति** ॥ हिमस्य व्यपायादपगमाद्विशदा नीरुजा अधरा ओष्ठा यासां तासामापाण्डरीभूतमुखच्छवीनाम् । कुङ्कुमपरिहारादिति भावः । किंपुरुषाङ्गनानां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे । घर्मोदयात्स्वेदोदयोऽभूदित्यर्थः । विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः । हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥ ३४ ॥**

34. On seeing that untimely advent of Spring, ascetics having the forest on the mountain for their abode, somehow (with great difficulty) controlled their minds with their perturbation stopped (composed) with great efforts.

**तपस्विन इति** ॥ स्थाणोर्वनमोको येषां ते तपस्विनस्तत्रत्या मुनयः । समनकाल आद्यन्तावस्था आकालिकीम् । अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीमित्यर्थः । 'आकालिकडाद्यन्तवचने' इति समानकालादिकट्प्रत्ययः प्रकृतेराकाल आदेशश्च निपातितः । 'टिड्ढाणञ्-' इत्यादिना ङीप् । केचिदकालाद्देहादध्यात्मादित्वाद्भवार्थे ठगित्याहुः । तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथंचिदीशा नियन्तारो बभूवुः ॥

**तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।**
**काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥**

35. When Madana, accompanied by Rati as his companion, came to that region with his flower-bow (well-) strung, the (various) couples exhibited by (their) actions passion pervaded by the joy of love reaching its limit.

---

१ आपाण्डुरीभूत.

**तमिति** ॥ आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्रतिर्द्वितीया यस्य तस्मिन्रतिसहाये मदने तं देशं स्थाण्वाश्रमं प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जंगमानि च मिथुनानि काष्ठोत्कर्षः । काष्ठोत्कर्षे स्थितौ दिशि ' इत्यमरः । तां गतो यः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः । ' प्रेमा ना प्रियता हार्दं प्रेम स्नेहः ' इत्यमरः । स एव रसस्तेनानुविद्धं संपृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः । शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थः ॥

ताश्चेष्टा आह ' मधु ' इत्यादिभिश्चतुर्भिः—

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।**
**शृङ्गेण च[1] स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥**

36. The bee, following his beloved, drank honey in the common cup of a flower; and the black antelope scratched with (his) horn, the she-deer who closed her eyes at his touch.

**मध्विति** ॥ द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः । उपचारात्तदर्थोऽपि द्विरेफ उच्यते । यथाह कैयटः—'शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते । यथा भ्रमरशब्दस्य द्विरेफत्वाद्द्विरेफो भ्रमरः' इति । कुसुममेवैकं साधारणं पात्रं तस्मिन्मधु मकरन्दम् । 'मधु मद्ये पुष्परसे' इति विश्वः । स्वां प्रियां भृङ्गीमनुवर्तमानोऽनुसरन्पपौ । तत्पीतशेषं पपावित्यर्थः । कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः । 'वर्णो वर्णेन' इति समासः । स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत घर्षितवान् । 'कण्ड्वादिभ्यो यक्' इति यक् । ततः कर्तरि लङ् ॥

**ददौ रसात्[2]पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।**
**अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ ३७ ॥**

37. Through love *(rasa)* the she-elephant gave a mouthful of water, fragrant with pollen of lotuses, to the elephant; the ruddy goose (lit. one named after a part of the chariot—*chakravaka)* honoured his wife with a half-eaten lotus-fibre.

**ददाविति** ॥ रसादतिरागात्करेणुः करिणी । ' करेणुरिभ्यां स्त्री नेभे' इत्यमरः । पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुस्तस्य, गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकोऽर्धं यथातथोपभुक्तेनार्धजग्धेन बिसेन जायां संभावयामास । स्वजग्धशेषं ददावित्यर्थः ॥

---

१ संस्पर्श. २ सरःपङ्कज.

गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे[1] ॥ ३८ ॥

38. In the intervals of singing, the (male) *Kimpurusha* kissed the face of his beloved with the painted lines slightly disfigured *(samuchchhvasita)* by particles of sweat (lit. water of fatigue) (and) looking to advantage with eyes rolling on account of wine from flowers *(pushpasava)*.

**गीतान्तरेष्विति** ॥ किंपुरुषः किंनरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः किंचिदीषत्समुच्छ्वासिता विश्लेषिताः पत्रलेखा यस्य तत् । पुष्पाणामासवो मद्यं पुष्पासवः । पुष्पोद्भवमद्यमित्यर्थः । वसन्ते मधूकस्य संभवात्पुष्पवासितमिति केचित् । तेनाघूर्णिताभ्यामुद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे चुचुम्ब ॥

पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥

39. The trees too received embraces with the arms in the form of bent branches from (their) wives in the form of creepers whose breasts in the form of clusters of flowers were full and who were attractive with (their throbbing) lips in the form of vibrating foliage.

**पर्याप्तेति** ॥ पर्याप्ताः समग्राः पुष्पस्तबका एव स्तना यासां ताभ्यां । स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीष् । स्फुरन्तः प्रवालाः पल्लवा एवौष्ठास्तैर्मनोहराभ्यो लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि । लिङ्गादेव पुंस्त्वं गम्यते । विनम्राः शाखा एव भुजास्तैर्बन्धनान्यवापुः ताभिरालिङ्गिता इत्यर्थः । स्थावराणामपि मदनविकारोऽभूत्किमुतान्येषामिति भावः । एतच्च तरुलतानामपि चेतनत्वादुक्तम् । यथाह मनुः—'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति । अत्र रूपकालंकारः ॥

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

40. At this moment, Hara, even though he had heard the singing of the Apsarases, remained engrossed in deep meditation; for, obstacles are never capable of distracting the concentration of those who are masters of themselves.

---

१ चुचुम्ब.

**श्रुतेति** ॥ अस्मिन्क्षणे वसन्ताविर्भावकाले भगवान्हरः श्रुताप्सरोगीतिरपि । दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः । प्रसंख्यानपर आत्मानुसंधानपरो बभूव । तथाहि । आत्मनश्चित्तस्येश्वराणां नियन्तॄणाम् । वशिनामित्यर्थः । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । घञर्थे कप्रत्ययः । जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥

**लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।**
**मुखार्पितैकाङ्गुलीसंज्ञयैव मा चापलायेति गणान्व्यनैषीत् ॥ ४१ ॥**

41. Now, Nandin, standing at the entrance of the bower of creepers, placing the golden cane on the left fore-arm, ordered the attendants *(Ganas)*, with the words: "Do not (tend) to rashness", by the mere sign of a single finger placed on (his) mouth.

**लतेति** ॥ अथ लतागृहद्वारं वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः । 'नन्दी भृङ्गिरिटिस्तुण्डिनन्दिनौ नन्दिकेश्वरे' इति कोशः । मुखेऽर्पितायाः सरोषविस्मयस्तिमितावलोकं निहिताया एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः । गणान्प्रमथांश्चापलाय चापलं कर्तुं मा भवतेति । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । व्यनैषीच्छिक्षितवान् ॥

न केवलं गणा एव विनीताः, किंतु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—

**निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।**
**तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥**

42. At his command, the entire forest stood (still), like a scene *(arambha)* painted in a picture, with trees motionless, bees quiet, birds silent and beasts having their movements stopped.

**निष्कम्पेति** ॥ निष्कम्पवृक्षम् । इदमुद्भिज्जोपलक्षणम् । निभृतद्विरेफं निश्चलभृङ्गम् । स्वेदजोपलक्षणमेतत् । मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम् । एतेनाण्डजजातिरुक्ता । शान्तमृगप्रचारम् । जरायुजोपलक्षणमेतत् । सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे । 'नृगवाद्या जरायुजाः । स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः' इत्यमरः ॥

**दृष्टिप्रपातं परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥**

43. Avoiding the falling of his glance, like (the region with) Venus in front, in an expedition, Cupid entered the place of meditation of Shiva (*Bhutapati*), with branches of Nameru trees intertwined on the edges.

**दृष्टिप्रपातमिति** ॥ कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन्देशे तं पुरःशुक्रं देशमिव । 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्तते ॥' इति प्रतिषेधात् । तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां शाखा यस्य तत् । तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम् । आस्पदं प्रतिष्ठायाम् इति निपातः । विवेश ॥

**सदेवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं[1] संयमिनं ददर्श ॥ ४४ ॥**

4. He, whose death (lit. falling of the body) had drawn near, saw the self-restrained three-eyed (Shiva) seated on a raised seat of a pine tree having a tiger-skin for its cover.

**स इति** ॥ आसन्नशरीरपात आसन्नमृत्युः स कामः शार्दूलचर्मणा व्यवधानवत्याम् । व्याघ्रचर्मास्तृतायामित्यर्थः । 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्राशस्त्यादिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श । केचित्साहसिकाः 'त्रिलोचनम्' इति पेठुः । त्र्यम्बकमित्युक्तो पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसो महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति ।

**पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।**
**उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

45. Shiva, with the upper part of (his) body steadied on account of the *Paryanka* posture (sitting on the hams), (sitting) upright and erect, with both (of his) shoulders contracted, (looking) like (one) having a full-blown lotus between his thighs, on account of the placing of the pair of open hands turned upwards.

**पर्यङ्केति** ॥ पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धमृजुरायतश्चर्ज्वायतस्तं संनमितावुभावंसौ यस्य तं तथोक्तम् । वृत्तिविषये उभशब्दस्थान उभयशब्दप्रयोग इत्युक्तं कैयटेन । उत्तानः ऊर्ध्वतलो यः पाणिद्वयस्य संनिवेशः संस्थानं तस्मादङ्कमध्ये

---

[1] त्रिलोचनम्.

प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् । वीरासने वसिष्ठः—' एकं पादमथैकस्मिन्वि-न्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥ ' इति । तथा योगसारे–' उत्तानिते करतले करमुत्तानितं परम् । आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥ इति ॥

**भुजंगमोन्नद्ध[1]जटाकलापं कर्णावसक्त[2]द्विगुणाक्षसूत्रम् ।**
**कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं[3] ग्रन्थिमतीं दधानम् ॥ ४६ ॥**

46. (Shiva) whose mass of matted hair was tied up with a snake, whose two-fold rosary *(akshasutra)* touched (his) ear and who wore the knotted skin of a black antelope, very blue through contact with the radiance of his throat.

**भुजंगमेति** ॥ भुजंगमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम् । कर्णावसक्तम् । कर्णावलम्बीतयर्थः । अतएव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम् ॥

**किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां वि[4]रतप्रसङ्गैः ।**
**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यी[5]कृतघ्राणमधोमयूखैः ॥ ४७ ॥**

47. (Shiva) making (his) nose the aim of (his) eyes in which the pupils were somewhat bright, steady (motionless) and fierce, which had given up the occupation *(prasanga)* of contracting the eye-brows, the rows of whose eye-lashes were without throbbing (and) whose rays (were directed) downwards.

**किंचिदिति** ॥ किंचित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः । ' तारकाक्ष्णः कनीनिका ' इत्यमरः । भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैरविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिरधःप्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः । त्रिनेत्रत्वाद्बहुवचनम् । लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिमित्यर्थः । ' करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः ॥' इति योगसारे ॥

**अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगम् ।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥**

---

१ उद्बद्धः आबद्ध. २ कर्णावतंस. ३ मृगत्वचम्. ४ विगत. ५ लक्षीकृत.

48. (Shiva) who was like a cloud without the fury of downpour, like a reservoir of water without waves, like a lamp without motion (steady) in a windy place, on account of the control of the winds pervading internally.

**अवृष्टीति** ॥ अन्तश्चरन्त्यन्तीतश्चरास्तेषां मरुतां प्राणादीनां निरोधाद्धेतोरवृष्टि-संरम्भमविद्यमानवर्षभ्रममम्बुवाहमिव स्थितम् । एतेन प्राणनिरोधः सूचितः । अनुत्तरंग-मनुग्दूततरंगमपामाधारं ह्रदमिव स्थितम् । एतेनापाननिरोधः सूचितः । तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम् । एतेन शेषवायुनिरोधः सूचितः । 'निवाता-वाश्रयावातौ' इत्यमरः ॥

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।**
**मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४९ ॥**

49. (Shiva) withering out the splendour of the new Moon *(balasya indos)* having greater softness than a lotus-fibre, by shoots of light rising from the head and getting an outlet through the eyelike hole in the skull.

**कपालेति** ॥ कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तो ब्रह्मरन्ध्रात् । पञ्चम्यास्तसिल् । उदितैरुद्भूतैर्ज्योतिःप्ररोहैस्तेजोङ्कुरैर्मृणालसूत्राधिकं सौकु-मार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥

**मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

50. (Shiva) seeing within his self that soul whom the Kshetravids (people having spiritual knowledge) know as Akshara (imperishable), after having fixed in the heart, the mind with its movements through the nine doors (senses) forbidden and which could be controlled by concentration (alone).

**मन इति** ॥ नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः संचारो यस्य तत्तथोक्तम् । समाधिना प्रणिधानेन वश्यं वशंगतम् । यत्प्रत्ययः । 'प्रणिधानं समाधानं समाधिश्च समाश्रयः' इति हलायुधः । मनो हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य । तथा च वसिष्ठः-- ' यतो निर्याति विषयान्यस्मिंश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥ ' इति । क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः यं न क्षरतीत्यक्षरमविनाशिनं विदुर्विदन्ति । ' विदो लटो वा ' इति झेर्जुस् । तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्वन्तम् । स्वाति-रेकेण परमात्मनोऽभावादिति भावः ॥

स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥

51. Looking not from far, at (him) who was in that condition, having uneven eyes (*ayugma* = odd number of eyes) (and) unassailable even by the mind, cupid with his hands relaxed through fear did not notice even the bow and the arrow slipped down from his hands.

**स्मरेति** ॥ स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषमाक्षमदूरात्पश्यन् । साध्वसेन सन्नहस्तो विश्लथपाणिः सन् । स्वहस्तात्स्रस्तं शरं चापमपि चापं च नालक्षयन्न विवेद । भीतो मुह्यतीति भावः ॥

निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५२ ॥

52. Then was seen the daughter of the king of mountains, followed by the sylvan deities, kindling, as it were, his very nearly extinct valour with the excellence of her body.

**निर्वाणेति** ॥ अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम् । नष्टप्रायमित्यर्थः । अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण संधुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता वनदेवताभ्यां सखीभूताभ्यामनुप्रयातानुगता स्थावरराजकन्या पार्वत्यदृश्यत दृष्टा ॥

तामेवाह चतुर्भिः—

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥

53. (Uma) wearing a decoration of vernal flowers, wherein the ruby was put to shame by the Ashoka flowers, the lustre of gold was snatched away by the Karnikara flowers and the Sindhuvara flowers were turned into a pearl-necklace.

**अशोकेति** ॥ अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत्तथोक्तम् । आकृष्टहेमद्युतीन्याहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम् । मुक्ताकलापीकृतानि सिन्दुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् । 'सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः । वसन्तपुष्पाण्येवाभरणं वहन्ती ॥

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५४ ॥

---

१ सिन्धु. २ सुजातपुष्प.

54. (Uma) wearing a garment of red colour like that of the newly risen Sun (and) just slightly bent *(avarjita)* by her breasts, like a creeper having vibrating young shoots (and) slightly bent due to the abundant bunches of flowers.

**आवर्जितेति** ॥ स्तनाभ्यां किंचिदावर्जितेवेषदानमितेव । तरुणार्कस्य राग इव रागो यस्य तत् । बालार्कारुणमित्यर्थः । उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । वासो वसानाच्छादयन्ती । अतएव पर्याप्तपुष्पस्तबकावनम्रा पल्लविनी किसलयवती संचारिणी लतेव । स्थितेति शेषः ॥

**स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥ ५५ ॥**

55. (Uma), holding up again and again the girdle of the string of Bakula flowers slipping down from (her) hips, as if a second bowstring placed as a deposit by Cupid who knew the proper place (person—*sthana).*

**स्रस्तामिति** ॥ स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम् । कर्मणि प्रभवतीति ' कर्मण उकञ् ' इत्युकञ्प्रत्ययः । तस्य द्वितीयां मौर्वीमिव स्थिताम् । अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनिर्यातनायोपयुज्यत इति भावः । नितम्बात्स्रस्तां चलितां केसरदाम बकुलमाला सैव काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती ॥

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।**
**प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ५६ ॥**

56. (Uma) with her eyes tremulous due to alarm, warding off, every moment, with the toy-lotus *(lilaravinda)*, the bee, its desire (thirst) increased by the fragrant breaths, hovering near (her) lip resembling the Bimba fruit.

**सुगन्धीति** ॥ सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णम् । बिम्बतुल्योऽधरो बिम्बाधरः । ' वृत्तौ मध्यपदलोपः स्यात् ' इति वामनः । तस्यासन्नचरं संनिकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिश्चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥

**तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।**
**जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥ ५७ ॥**

---

१ पुष्पकाञ्चीम्. २ द्वितीयमौर्वीमिव. ३ पुष्पकेतु. ४ स्वकर्मसिद्धिम्. ५ आशशंस.

57. After seeing her, faultless in all limbs, giving a cause *(pada)* for shame even to Rati, Cupid again hoped for success of his mission about (Shiva), the bearer of the pike *(shula*—Shiva's trident) who had controlled his senses.

**तामिति** ॥ सर्वावयवेष्वनवद्यामगर्ह्याम् । 'अवद्यपण्य–' इति निपातः । रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानाम् । न्यूनतामावहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये । दुर्जयेऽपीत्यर्थः । शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे । पूर्वं 'साध्वससन्नहस्तः' ( ३ । ५१ ) इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥

**भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।**
**योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८॥**

58. No sooner did Uma reach the threshold *(pratihara-bhumi)* of her future husband, than he (Shiva) desisted from Yoga (concentration) after having seen the highest light within, having the name Paramatman (the Highest Soul).

**भविष्यत इति** ॥ उमा च भविष्यतः पत्युः शंभोः प्रतिहारभूमिं द्वारदेशं समाससाद । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । स शंभुश्चान्तः परमात्मेति संज्ञा यस्य तत्परं मुख्यम् । 'परं दूरान्यमुख्येषु' इति यादवः । ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगाद्ध्यानात् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । उपाररामोपारतः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥

**ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।**
**शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥ ५९ ॥**

59. Then Isha (Shiva), the portion of the ground under whom was somehow supported by the tops of the hoods of the lord of serpents, having slowly released (his) breaths, relaxed the tight *Paryanka* posture *(paryankabandha* — sitting on hams, as in the *Virasana)*.

**तत इति** ॥ ततो भुजंगाधिपतेः शेषस्य फणाग्रैरधो भूमेरधः कथंचिदतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः । वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनःसंचारो येन स कृतप्राणविमुक्तिरीशो निबिडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥

**तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥**

१ उपासितुं सा च पिनाकपाणिम्. २ अन्तर्गतम्. ३ अनुमित.

60. Bowing to him, Nandi reported to him (about) the daughter of the mountain (Uma) who had arrived with the object of service, and (then) admitted her whose entrance was permitted merely by the contraction of the eye-brows of (his) master.

**तस्मा इति** ॥ अथ नन्दी तस्मै भगवते । क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेनोपेताम् । सेवार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशामेनां शैलसुतां प्रवेशयामास च ॥

**तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥**

61. By her (two) friends was strewn, after salutation, at the base of the feet of Triambaka (the three-eyed Shiva) a heap of flowers of Spring (the end of winter), plucked by their own hands (and) mixed with fragments of foliage.

**तस्या इति** ॥ तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य संबन्धी पुष्पोच्चयः पुष्पप्रकरः । 'हस्तादाने चेरस्तेये' इति घञ्विषयत्वात्कवीनामयं प्रामादिकः प्रयोग इति वल्लभः । त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्कारपूर्वकं व्यकीर्यत विक्षिप्तः ॥

**उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥**

62. Letting fall the fresh Karnikara flowers, looking beautiful in the midst of (her) dark hair Uma made a salutation to Vrishabhadhvaja (Shiva having the bull for his emblem), with (her) head, with the foliage on the ear slipping down.

**उमेति** ॥ उमापि नीलालकानां मध्ये शोभत इति तथोक्तम् । अलकन्यस्तमित्यर्थः । नवकर्णिकारं विस्रंसयन्ती कर्णाच्च्युतः पल्लवो यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार । क्रियाग्रहणात्संप्रदानत्वम् ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥**

63. She was told the truth itself by Shiva (Bhava), with the words: "Obtain a husband not wooing another (lady)"; for the words of the Lord never bear a sense contrary (to truth), in this world.

**अनन्येति** ॥ सा कृतप्रणामा देवी भवेन हरेण। अन्यां न भजतीति तमनन्यभाजम्। 'भजो ण्विः' इति ण्विप्रत्ययः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। पतिमाप्नुहीति तथ्यं सत्यमेवाभिहितोक्ता। उत्तरत्र तथैव संभवादिति भावः। अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः। तथाहि। ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने। 'लोकस्तु भुवने जने' इत्यमरः। विपरीतं विसंवादिनमर्थमभिधेयं न पुष्णन्ति। न बोधयन्तीत्यर्थः।

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ६४ ॥**

64. Having waited for an opportunity for (shooting his) arrow, Cupid, on his part, desirous of entering the mouth of fire like a moth, fixing his aim on Shiva (Hara), before the very eyes of Uma, touched the string of his bow again and again.

**काम इति** ॥ कामस्तु बाणावसरं प्रतीक्ष्योमासंनिधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवच्छलभवत्। 'समौ पतङ्गशलभौ' इत्यमरः। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः। विशतेः सन्नन्तादुप्रत्ययः। उमायाः समक्षमक्ष्णः समीपमुमासमक्षम्। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तोऽच्प्रत्ययः। हरे बद्धलक्ष्यः सन्। शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥

**अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥**

65. Then, with her hand red in colour, Gauri (Uma) presented to devout Girisha (Shiva), a rosary of the seeds of loutuses (growing) in the Ganges, dried by the rays of the Sun.

**अथेति** ॥ अथ गौरी। तपोऽस्यास्तीति तपस्वी। 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः। तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥

**प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च।**
**संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥**

66. No sooner did Trilochana (three-eyed Shiva) set about to accept it, due to (his) love for the devotees (*pranayin*), than Pushpadhanvan (the flower-bowed Cupid) fitted to his bow the unfailing arrow, by name Sammohana.

**प्रतिग्रहीतुमिति** ॥ त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात्तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे । पुष्पं धनुर्यस्य स पुष्पधन्वा कामश्च । 'वा संज्ञायाम्' इत्यनङ्गदेशः । संमोह्यतेऽनेनेति संमोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त संहितवान् ॥

**हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ ६७ ॥**

67. Hara (Shiva), on his part, with his composure slightly disturbed, like the ocean at the beginning of moon-rise, cast his eyes on the face of Uma, with its lower lip resembling the Bimba fruit.

**हर इति** ॥ हरस्तु हरोऽपि चन्द्रोदयारम्भेऽम्बुराशिरिव किंचिदीषत्परिलुप्तधैर्यः । न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । बिम्बफलतुल्योऽधरोष्ठो यस्य तस्मिन्नुमामुखे विलोचनानि व्यापारयामास । त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥

**विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।**
**साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥**

68. The daughter of the mountain (Uma) too, manifesting love with her limbs almost like a shaking young Kadamba tree, stood, turning aside her face more charming (and) with (her) eyes cast around (*paryastavilochanena*).

**विवृण्वतीति** ॥ शैलसुतापि स्फुरद्बालकदम्बकल्पैर्विकसत्कोमलनीपसदृशैः । पुलकितैरित्यर्थः । 'ईषदसमाप्ता-' इत्यादिना कल्पप्प्रत्ययः । अङ्गैर्भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्यस्तविलोचनेन व्रीडाविभ्रान्तनेत्रेण मुखेनासाचि साचि संपद्यमाना साचीकृता तिर्यक्कृता । 'तिर्यगर्थे साचि तिरः' इत्यमरः । तस्थौ । ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्या अप्युदितो रतिभाव इति भावः ॥

**अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।**
**हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥**

69. Then again, forcibly checking the excitement of the senses, through self-control, Shiva (lit. possessed of not even i.e. odd eyes), desirous of seeing the cause of the perturbation of his mind cast his glance at the ends (*upanta*) of the quarters.

---

१ परिवृत्त.

**अथेति** ॥ अथायुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रिनेत्रो वशित्वाज्जितेन्द्रियत्वादिन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं पुनर्बलवद्दृढं निगृह्य निवार्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥

**स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥**

70. He saw the mind-born (Atmayoni — Madana), prepared to assault, with (his) fist placed on the corner of the right eye, with (his) shoulders drooping, with (his) left leg bent (and) with (his) elegant bow formed into a circle.

**स इति** ॥ स भगवान्दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसमाकुञ्चितः सव्यपादो यस्य तम् । आलीढाख्यस्थानके स्थितमित्यर्थः । चक्रीकृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श । आलीढलक्षणमाह यादवः-- 'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति ॥ समानौ स्यात्समपदमालीढं पदमग्रतः । दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥' इति ॥

**तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।**
**स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥ ७१ ॥**

71. Truly a flashing fire blazing upwards issued out from the third eye of him (Shiva) whose rage had increased due to an attack on (his) penance (and hence) whose face was hard to look at on account of frowns (contractions of the eyebrow, *Bhrubhanga).*

**तप इति** ॥ तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन्नुद्दीप्यमान उदर्चिरुद्भूतज्वालः कृशानुरग्निः सहसातर्कितमेव । 'अतर्किते तु सहसा' इत्यमरः । निष्पपात किल निश्चक्राम खलु ॥

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।**
**तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ७२ ॥**

72. Scarcely when the words of the Gods: "Oh Lord, restrain, restrain (your) anger" traversed the sky, did that fire born (risen) from the eye of Hara (Bhava) made Madana remain in the form of ashes.

**क्रोधमिति** ॥ हे प्रभो स्वामिन् , क्रोधं संहर संहर निवर्तय निवर्तय । 'चापले द्वे भवति इति वक्तव्यम्' इति वार्तिकेन द्वित्वम् । 'संभ्रमेण वृत्तिश्चापलम्' इति काशिका । इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावच्चरन्ति प्रवर्तन्ते तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार । ददाहेत्यर्थः ॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥**

73. By the swoon resulting from the severe *(tivra)*, unexpected blow *(abhishanga)*, paralyzing the function of the senses, Rati, unaware of the disaster to her husband, was as it were, obliged for a while *(muhurta)*.

**तीव्रेति** ॥ तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसंभवेन । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्रा । रतिर्मदनभार्या मुहूर्तमज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव । सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥

**तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।**
**स्त्रीसंनिकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥**

74. Having quickly smashed him, the impediment to penance, like the adamant (smashing) a tree, the devout *(tapasvi)* lord of beings (Shiva), desiring to avoid the presence of woman, disappeared with the Bhutas.

**तामिति** ॥ तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसंनिकर्षं स्त्रीसंनिधानं परिहर्तुमिच्छन् तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः सन्नन्तर्दधे ॥

**शैलात्मजापि पितुरुच्छिरसोऽभिलाषं**
**व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।**
**सख्योः समक्षमिति चाधिकजातलज्जा**
**शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥**

---

१ परिहर्तुकामः सोऽन्तर्दधे.

75. Regarding the desire of (her) exalted father and her own graceful body as useless, the daughter of the mountain also with difficulty, went (away) disspirited, with (her) face turned homewards, feeling greater shame as (it happened) in the presence of her two friends.

**शैलात्मजेति** ॥ शैलात्मजा पार्वत्यप्युच्छिरस उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा । समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः । शून्या निरुत्साहा सती कथंचित्कृच्छ्रेण भवनस्याभिमुखी जगाम ॥

**सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या**
**दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।**
**सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां**
**प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः[1] ॥ ७६ ॥**

76. Instantly, bearing on (his) arms his pitiable daughter who had closed (her) eyes through fear of the anger of Rudra (Shiva), the mountain with his body stretched through speed, had his steps turned to the road, like the divine elephant bearing a lotus plant sticking to his tusks.

**सपदीति** ॥ सपद्यद्रिर्हिमवान्रुद्रस्य संरम्भात्कोपाद्भीत्या । 'संरम्भः संभ्रमे कोपे' इति विश्वः । मुकुलिताक्षीं निमीलितनेत्राम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीष् । अनुकम्पितुमर्हामनुकम्प्याम् । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत्सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् पन्थानं प्रति गता मार्गानुसारिणी गतिर्यस्य स प्रतिपथगतिरासीत् । पन्थानमनुसृत्य जगामेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः ।

---

१ अथ स. २ दीर्घीकृतात्मा.

# कुमारसंभवम्

## THE BIRTH OF KUMARA

### चतुर्थः सर्गः ।

*Canto IV*

मूर्च्छिता रतिरित्युक्तम् । संप्रति तद्वृत्तान्तमेवाह—

**अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।**
**विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥**

1. Now, the wife of Kama (God of Love) who was lost in stupor and insensible was restored to consciousness by Fate causing her to experience the new widowhood with its unbearable agony.

**अथेति** ॥ अथानन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती । 'परायणमभिप्रेते तत्परे परमाश्रये' इति यादवः । विवशा मूढत्वान्निश्चेष्टा कामवधू रतिः । असह्या दुःसहा वेदना यस्मिंस्तत्तथोक्तम् । विधवाया गतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । नवग्रहणं दुःसहत्व-द्योतनार्थम् । प्रतिपादयिष्यतानुभावयिष्यता । क्रियार्थक्रियायां लृट् । विधिना दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः विबोधिता । वैधव्यानुफलोऽयं विधिरिति भावः । अस्मिन्सर्गे वियोगिनीवृत्तानि—'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥

**अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।**
**न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥**

2. She directed to attention her eyes opened at the end of the swoon; (but) she did not know that her husband was forever lost to view to those unsatisfied (eyes).

**अवधानेति** ॥ सा रतिः प्रलयान्ते मूर्च्छावसाने । 'प्रलयो नष्टचेष्टता' इत्यमरः । उन्मिषिते उन्मीलिते विलोचने । अवधानं परं प्रधानं ययोस्तेऽवधानपरे दिदृक्षयावहिते चकार । द्रष्टव्याभावात्तु न विवेदेत्याह—नेति । प्रियं काममतृप्तयोस्तृप्तिं न गतयोः । नित्यदिदृक्षमाणयोरित्यर्थः । तयोर्लोचनयोः । दर्शनक्रियापेक्षया संबन्धे षष्ठी । अत्यन्तवि-लुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्मभूतस्य तमत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती । प्रियनाशापरिज्ञानाद्दिदृक्षांचक्र इति तात्पर्यार्थः ।

---

१ निमग्न.

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥

3. By her, who had risen up after saying; "Oh Lord of life, are you alive", was seen on the ground in front the form of a man, merely the ashes due to (made by) the fire of Hara's anger.

**अयीति** ॥ अयीति प्रश्ने । 'अयि प्रश्नानुनययोः' इति विश्वः अयि जीवितनाथ, जीवसि प्राणिषि कच्चिदित्यभिधायोत्थितया तया रत्या पुरोऽग्रे क्षितौ पुरुषस्याकृतिरिवाकृतिर्यस्य तत्पुरुषाकृति केवलमेकं हरकोपानलभस्म ददृशे दृष्टम् । न तु पुरुष इति भावः ॥

**अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसुरस्तनी ।**
**विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥**

4. And now again becoming distressed she wept, her breasts dutsy on account of (her) rolling on the ground, her hair dishevelled, making the (forest—) land a fellow-sufferer as it were, (making it as it were a sharer in the grief).

**अथेति** ॥ अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्त । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । विकीर्णमूर्धजा विकीर्णा विक्षिप्ता मूर्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिम् । तत्रत्यान्प्राणिन इत्यर्थः । 'जानपदकुण्डगोणस्थल–' इत्यादिना ङीष् । समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती । 'विलापः परिदेवनम्' इत्यमरः ॥

**उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।**
**तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥**

5. That body of yours which by its possession of extreme loveliness became the standard of comparison in the case of amorous persons has been here reduced to such (miserable) state; (and still) I do not get cut to pieces; women are indeed hard-hearted!

**उपेति** ॥ तव यत्करणं गात्रम् । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः । कान्तिमत्तया सौन्दर्येण हेतुना विलासिनां विलसनशीलानाम् । 'वौ कषलस–' इत्यादिना घिनुण्प्रत्ययः । उपमीयते येन तदुपमानमभूत् । तत्करणमिदमीदृशीं दशामवस्थां गतम् । भस्मीभूतमित्यर्थः । तथापि न विदीर्ये न विदीर्णा भवामि ।

कर्तरि लट्। तथाहि। स्त्रियः कठिनाः खलु। कठिनत्वादविदीर्यमाणत्वमित्यर्थः। कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः। 'धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाश्रिता। स्मितपूर्वं तथालापो विलास इति कीर्तितः॥' इति॥

**क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः।**
**नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः॥ ६॥**

6. Casting me off, whose life depends upon you, where indeed have you run away, tearing off affection in an instant, like the mass of water (leaving) the lotus-plant, when the construction of the dam gives way?

**क्वेति**॥ हे प्रिय, क्षतसेतुबन्धनो भग्नसेतुबन्धो जलसंघातो जलौघो नलिनीमिव जलैकायत्तजीवितामिति शेषः त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन् विद्रुतः पलायितोऽसि। सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदम्। युवादित्वादण्प्रत्ययः। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। अणि हृद्भावान्न 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। हृद्भूतस्याण्विधाने तूभयपदवृद्धिः स्यात्। यथा सुहृदो भावः सौहार्दमिति। तदेवाह वामनः— 'सौहृददौर्हृदशब्दावनणि हृद्भावात्' इति॥

**कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम्।**
**किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते॥ ७॥**

7. You have given no offence to me; neither have I acted adversely towards you. Why then without a cause even a look is denied to the lamenting Rati?

**कृतेति**॥ हे प्रिय, त्वं मे मम विप्रियमप्रियं कृतवान्नासि। मया च ते तव प्रतिकूलमप्रियं न कृतम्। अकारणं निष्कारणमेव। परस्परापकाररूपकारणाभावेऽपीत्यर्थः। क्रियाविशेषणमेतत्। विलपन्त्यै। त्वद्दर्शनार्थिन्या अपीति भावः। रतये किं कथं दर्शनं न दीयते। क्रियाग्रहणाच्चतुर्थी॥

विप्रियमाशङ्कते—

**स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्।**
**च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा[1]॥ ८॥**

8. Do you remember, oh Smara, (my) binding (thee) with girdle-strings at your blunders in names (gotra) or the floggings with the ornamental lotus hurting (your) eyes by the fallen filaments?

---

१ ताडनानि च.

**स्मरसीति** ॥ हे स्मर, गोत्रस्खलितेषु नामव्यत्यासेषु । 'गोत्रं नाम्न्यचले कुले' इति विश्वः मेखलागुणैर्बन्धं स्मरस्युत स्मरसि वा । 'विकल्पे किं किमूत च' इत्यमरः । च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तान्यवतंसोत्पलताडनानि । सधूलिक्षेपताडनानीत्यर्थः स्मरसि वा । अपकारस्मरणादिदमदर्शनमिति भावः ।

**हृदये वससीति मत्प्रियं यदवोचदस्तदवैमि कैतवम् ।**
**उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥**

9. I regard your remark pleasing to me, that: "You reside in my heart" as a falsehood; if this was not (merely) a complimentary remark, how is it that you are bodiless, (while) Rati is unhurt?

**हृदय इति** ॥ हृदये वससीति स्मरवाक्यानुवादः इत्येवंरूपं मत्प्रियं यदवोच उक्तवानसि । ब्रूञो लुङि 'वच उम्' इत्युमागमः । तत्कैतवमवैमि मिथ्येति मन्ये । इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानम् । कैतवस्थानमिति यावत् । न चेत्त्वमनङ्गोऽशरीरः । कथं रतिरक्षताऽविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥

न च मे कश्चिद्विचारः किंतु लोकः शोच्यत इत्याह—

**परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।**
**विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥**

10. I shall enter upon the way taken by you—a new traveller to the other world. By Fate this world has been deceived; (since) the happiness of all living beings depends upon you.

**परलोकेति** ॥ परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य । अनेनानुगमनकालानतिपातः सूच्यते । तव पदवीं मार्गं प्रतिपत्स्ये । त्वामनुगमिष्यामीत्यर्थः । अतो मे नास्ति विचार इति भावः । किंतु विधिना दैवेनैष जनो लोको वञ्चितः प्रतारितः । देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु । अधिशब्दस्य शौण्डादित्वात् 'सप्तमी शौण्डैः' इति समासः । 'अध्युत्तरपदात्' इति खप्रत्ययः । एवमन्यत्रापि सुखप्रदाभावे कुतः सुखमिति भावः ॥

तदेवाह—

**रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।**
**वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥**

11. Oh dear, who else but you is powerful (enough) to convey the beloveds to the residence of their lovers, (when) distressed by the thunder of the clouds, on the streets of the town enveloped in the darkness of night?

**रजनीति** ॥ हे प्रिय, रजनीतिमिरेणावगुण्ठित आवृते पुरमार्गे घनशब्द-विक्लवा गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां विना । 'अन्या-रादितरर्ते–' इत्यादिना पञ्चमी । क ईश्वरः शक्तः । न कश्चिदित्यर्थः । न हि कामान्धानां भीतिरस्तीति भावः ॥

**नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।**
**असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥ १२ ॥**

12. The intoxication of wine causing the red eyes to roll about, and occasioning stammering in speech in every word, would be (only) a mockery of women now when you do not exist!

**नयनानीति** ॥ अरुणानि नयनानि घूर्णयन्भ्रमयन् । तथा पदे पदे प्रतिपदम् । वीप्सायां द्विरुक्तिः । वचनानि स्खलयन्विपर्यासयन्प्रमदानां वारुणीमदोऽधुना त्वय्यसति विडम्बनानुकृतिमात्रम् । मदनाभावे मदस्य निष्फलत्वादिति भावः । तथा च शिशु-पालवधे—'तां मदो दयितसंगमभूषः' ( १०।३३ ) इति ॥

**अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।**
**बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥**

13. Oh Bodiless one, coming to know that the body of (her) dear friend is reduced to a matter of narration only (i.e. dead), the Moon (maker of the night), with (her) rise rendered purposeless, will with sorrow abandon her waning even when the dark fortnight is over.

**अवगम्येति** ॥ हे अनङ्ग अशरीर, प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतमकथा कथा संपद्यमानं कृतं शब्दमात्रावशिष्टमवगम्य ज्ञात्वा निष्फलोदयः । उद्दीप्याभावादुद्दीपनवैफल्यमिति भावः । निशाकरश्चन्द्रो बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रान्मोक्ष्यति । वृथा वृद्धिरिति दुःखयिष्यत इत्यर्थः ।

**हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।**
**वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥**

14. Oh, say whose arrow will the new mango blossom now become, with its green, reddish and beautiful peduncles, (and) indicated by the sweet and indistinct warbling of the male cuckoo?

**हरितेति** ॥ हरितं चारुगं च । ' वर्णो वर्णेन' इति तत्पुरुषः । हरितारुगं चारु बन्धनं वृन्तं पुङ्खश्च यस्य स तथोक्तः । कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितोनुमापितश्च । चूतचर्वणकार्यत्वात्कलशब्दस्येति भावः । नवचूतकुसुमं संप्रति कस्य बाणतां शरत्वं गमिष्यति वद । अन्यस्य पुष्पबाणस्याभावादिति भावः ॥

**अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।**
**विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम् ॥ १५ ॥**

15. The row of bees many times employed by you for the purpose of a string of your bow is here, as it were, lamenting after me whose grief is unbearable, by screaming in piteous tones.

**अलीति** ॥ त्वयानेकशो बहुशो धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुणवत्कर्मणि च नियोजिताधिकृतेयमलिपङ्क्तिः करुणस्वनैर्दीनस्वनैर्विरुतैः कूजितैर्गुरुशोकां दुर्भरदुःखाम् । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवः । मामनुरोदितीव । उपसर्गात्सकर्मकत्वम् । ' रुदादिभ्यः सार्वधातुके' इतीडागमः ॥

**प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।**
**रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥**

16. Rising up first after securing (your) attractive body, just again instruct in the offices of Love's messenger, the female Cuckoo who is naturally learned in sweet tones (speech).

**प्रतिपद्येति** ॥ तावत्पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्योत्थितः सन् । मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेष्वादिशाज्ञापय । प्रगल्भानामेव दौत्याधिकार इति भावः । ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वः । ' अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरम् ' इति केचित् । ' उणादयो बहुलम् ' इति बहुलग्रहणाद्ध्रस्व इति वल्लभः ॥

**शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।**
**सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे ॥१७॥**

---

१ स्वैरः. २ परपुष्टा.

17. Remembering the embraces accompanied by tremors asked for by bowing down the head and those your enjoyments in private, oh Smara, I cannot get peace!

**शिरसेति** ॥ हे स्मर, शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि। 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः। सात्विकान्तरोपलक्षणमेतत्। 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्विकाः परिकीर्तिताः॥' इति। उपगूढान्यालिङ्गनानि च। नपुंसके भावे क्तः। तान्यनुभूतप्रकाराणि रह एकान्ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति। अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षास्तीति केचित्॥

**रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम्।**
**ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते॥ १८॥**

18. Oh expert in love, this seasonal decoration of flowers arranged by you yourself on my body (lit. limbs) still remains; that handsome body of yours is (however) not seen!!

**रचितमिति** ॥ हे रतिपण्डित रतिकुशल, त्वया ममाङ्गेष्ववयवेषु स्वयं रचितम् ऋतुरस्य प्राप्त आर्तव वासन्तम्। 'ऋतोरण्' इत्यण्प्रत्ययः। कुसुमप्रसाधनं पुष्पाभरणमिदं ध्रियतेऽवतिष्ठते। 'धृङ् अवस्थाने' इती धातोस्तौदादिकात्कर्तरि लट्। तव तत्प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते॥

**विबुधैरसि[1] यस्य दारुणैरसमाप्ते परिकर्माणि[2] स्मृतः।**
**तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे॥ १९॥**

19. Come, finish putting on the paint on this left leg of mine, before finishing the painting of which you were remembered by the cruel Gods.

**विबुधैरिति** ॥ दारुणैः क्रूरैः। प्राणान्तिके कर्मणि नियोगादिति भावः। विबुधैर्देवैः। अनभिज्ञत्वं च ध्वन्यते। यस्य मच्चरणस्य परिकर्मणि प्रसाधने। 'परिकर्म प्रसाधनम्' इत्यमरः। असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्मितरागं रचितलाक्षारागं कुर्वेह्यागच्छ॥

**अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते।**
**चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि॥ २०॥**

---

१ विबुधैस्त्वमनङ्ग. २ प्रतिकर्मणि.

20. Coming by the way of the moth (i.e. imitating a moth by burning myself in fire), I shall again seek refuge in your lap, Oh Love, before *(yavat na)* you are tempted by the lovely group of divine women *(apsarases)* in heaven.

**अहमिति** ॥ अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः । 'पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे' इति वैजयन्ती । एत्यागत्य पुनस्तेऽङ्काश्रयण्युत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । हे प्रिय, दिवि स्वर्गे चतुरैः सुरकामिनीजनैरप्सरोगणैर्यावन्न विलोभ्यसे विलोभयिष्यसे । 'यावत्पुरानिपातयोर्लट्' इति लट् ॥

**मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।**
**वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥**

21. This reproach, that Rati separated from Madana did indeed, at least for a moment survive, Oh Love, has become permanent, even though I am following you.

**मदनेनेति** ॥ हे रमण, त्वामनुयामि यद्यप्यनुगमिष्याम्येव । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । किंतु रतिर्मदनेन विनाकृता । वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । क्षणमात्रं जीविता किलेतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥

**क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।**
**सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥ २२ ॥**

22. How can the last (funeral) decoration on you separated (from me) by the next world (i.e., dead) be done by me? You have gone simultaneously in body and life (soul) to a state which cannot be though of.

**क्रियतामिति** ॥ परलोकेऽन्तरितस्य व्यवहितस्य । मृतस्येत्यर्थः । ते तव मयान्त्यमण्डनं कथं केन प्रकारेण क्रियताम् । क्रियतामित्यत्र कामचारे लोट् बोध्यः । द्रुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः । कुतः । अङ्गेन च जीवितेन च समं सहैवातर्कितामविचारितां गतिं गतोऽसि । इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥

**ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः[1] ।**
**मधुना सह सस्मितां कथां नयनोपान्तविलोकितं[2] च यत् ॥ २३ ॥**

---

१ निषङ्ग; निषक्त. २ विलोकितानि च.

23. I (with regret) remember you straightening the arrow, with the bow resting on your lap, the talk with Madhu (spring) accompanied by smiles and those glances through the corners of the eyes.

**ऋजुतामिति** ॥ शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य। 'धनुषश्च' इत्यनङादेशः। ते तव मधुना वसन्तेन सह। 'मधुर्दैत्ये वसन्ते च चैत्रे च' इति विश्वः। सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितमपाङ्गवीक्षणम्। त इत्यनुषङ्गः। तच्च स्मरामि ॥

**क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः।**
**न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥**

24. Where indeed is Madhu, your dear (cherished) friend who fashioned (your) bow with flowers? I hope, he too is not reduced by Pinakin of violent wrath, to the state experienced by his friend.

**क्वेति** ॥ हृदयं गच्छतीति हृदयंगमो हृद्यः। खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। ते तव सखा कुसुमैरायोजित-मारचितं कार्मुकं येन स कार्मुकनिर्माता मधुर्वसन्तः क्व नु क्व वा। गत इति शेषः। अथवा सोऽप्युग्ररुषा तीव्रकोपेन पिनाकिनेश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिम्। भस्मतामित्यर्थः। न गमितः खलु न प्रापितः किम्। 'जिज्ञासानुनये खलु' इत्यमरः ॥

**अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः।**[3][4]
**रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥**

25. And now, hit on the heart by those words of lamentation, as by poisoned arrows, to console (her), Madhu showed himself before the tormented Rati.

**अथेति** ॥ अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः शरैरिवाहतः सन्। 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः। मधुर्वसन्त आतुरामापन्नां रतिमभ्यु-पपत्तुमनुग्रहीतुम्। आश्वासयितुमित्यर्थः। 'अभ्युपपत्तिरनुग्रहः' इत्यमरः। आत्मानं पुरोऽदर्शयत्। आविरभूदित्यर्थः ॥

**तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च।**[5]
**स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥**

---

३ दिग्धफलैः. ४ इवार्दितः. ५ गुरु.

26. Seeing him she wept violently and beat her bosom so as to hurt her breasts; because in the presence of one's kinsmen sorrow grows *(upajayate)*, as it were, with the gates thrown open.

**तमिति** ॥ सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद । स्तनौ संबाध्य स्तनसंबाधम् । 'परिक्लिश्यमाने च' इति णमुल् । उरो जघान ताडितवती च । तथाहि । स्वजनस्याग्रतो दुःखं विवृतमपसारितं द्वारं कपाटं यस्य तदिवोपजायत आविर्भवति उच्छृङ्खलं प्रवर्तेत इत्युत्प्रेक्षाभिप्रायः ॥

**इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।**
**तदिदं[1] कणशो विकीर्यते[2] पवनैर्भस्म कपोतकर्बुरम्[3] ॥ २७ ॥**

27. And thus did she in distress say to him: "Oh Vasanta, see what is left of your friend! Here this ash, gray like a pigeon, is scattered in particles by breezes of wind."

**इतीति** ॥ दुःखमस्याः संजातं दुःखिता । संजातदुःखेत्यर्थः । तारकादित्वादितच् । सा रतिरेनं वसन्तमित्युवाच च । चकारः पूर्वोक्तसमुच्चयार्थः । हे वसन्त, पश्य सुहृदस्त्वत्सखस्य किं स्थितं किमुपस्थितं तदिदं कपोतकर्बुरं पारावतशबलं कणशश्चूर्णीभूतम् । अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैर्विकीर्यते विक्षिप्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥

**अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।**
**दयितास्वानवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥**

28. Oh Smara, now make yourself visible. This Madhava, (Spring) is extremely anxious; men's love towards their beloveds is unsteady; (but) their attachment towards their friends is really not fickle!

**अयीति** ॥ अयि स्मर, संप्रति दर्शनं देहि । एष माधवो वसन्तः पर्युत्सुकस्त्वद्दर्शनोत्कण्ठितः । त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्याह—नृणां पुरुषाणां दयितासु प्रेमानवस्थितमस्थिरम् । चलमित्यर्थः । सुहृज्जने प्रेम तु न चलं खलु ॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह—

**अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।**
**बिसतन्तुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः[4] ॥ २९ ॥**

---

१ यदिदं. २ प्रकीर्यते. ३ कपोतपाण्डुरम्. ४ कोमलः पेशल.

29. Was it not indeed by this companion (Vasanta), (standing by your side) that the world (both) with Gods and demons, was made to carry out your command, (you) having a bow with a string of lotus-fibres and arrows of delicate flowers.

**अमुनेति** ॥ ननु मदन, पार्श्ववर्तिना सहचरेणामुना वसन्तेन ससुरासुरं सुरासुरसहितं जगद्बिसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि कोमलानि पुष्पाण्येव पत्रिणो बाणा यस्य तस्य तव धनुष आज्ञां कारितम्। जगदाज्ञा कारितेत्यर्थः। 'हृक्रोरन्यतरस्याम्' इति जगतः कर्मत्वम् ॥

**गत एव न ते निवर्तते स सखा दीप इवानिलाहतः।**
**अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम्[1] ॥ ३० ॥**

30. That friend of yours is ever gone; like a lamp struck (extinguished) by the wind, he will not return. I am like the wick of this (lamp in the form of Madana); see me darkened by the unbearable distress.

**गत इति** ॥ स ते सखाऽनिलाहतो वायुताडितो दीप इव गत एव न निवर्तते। अहमस्य दीपायमानस्य दशा वर्तिरिव। तिष्ठामीति शेषः। 'दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि' इति विश्वः। कुत। अविषह्यव्यसनेन सोढुमशक्यदुःखप्रकर्षेण धूमितां संजातधूमां मां पश्य। धूमवत्त्वान्नष्टदीपदशासाम्यं धूमश्च व्यसनमेवेत्यर्थः ॥

**विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता।**
**अनपायिनि[2] संश्रयद्रुमे[3] गजभग्ने पतनाय वल्लरी ॥ ३१ ॥**

31. By Fate sparing me in the murder of Kama, half a murder (only) is perpetrated; in the event of an imperishable tree used as an asylum (shelter) being shattered by the elephant, a creeper is bound to fall.

**विधिनेति** ॥ननु वसन्त, कामवधे मदनवधे मां विमुञ्चता वर्जयता। अमारयतेत्यर्थः। विधिना दैवेन। विशसति हिनस्तीति विशसो घातुकः पचाद्यच्। विशसस्य कर्म वैशसम्। युगादित्वादण्प्रत्ययः। अर्धवैशसमर्धवधः कृतम्। 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः। पत्युः स्वस्य चाश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः। तथा चैकदेशवधे देशान्तरस्यापि वधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्यम्। एतदेवोपपादयति—अनपायिन्यनपायित्वेन विश्वस्ते संश्रयद्रुम आश्रयवृक्षे गजभग्ने सति

---

१ व्यसनप्रधूमिताम् २ अनघापि हि. ३ संश्रिता द्रुमे.

वल्लरी लता पतनाय। भवतीति शेषः। पतितुमेव साऽलमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी॥

संप्रत्यनन्तरकर्तव्यं प्रार्थयते—

**तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम्।**
**विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम्॥ ३२॥**

32. Therefore may ths need of a friend be fulfilled by you immediately. Pray *(nanu)* convey me, bereaved (as I am) to my husband's presence by consigning me to the flames.

**तदिति**॥ तत्तस्मात्कारणादुक्तप्रकारेण। अन्यथापि मरणस्यावश्यंभावादित्यर्थः। अनन्तरं भवतेदं वक्ष्यमाणं बन्धुजनप्रयोजनं बन्धुकृत्यं क्रियताम्। प्रार्थनायां लोट्। तदेवोपदिशति—ननु वसन्त, विधुरां विवशां मां ज्वलनातिसर्जनादग्निदानात्पत्युरन्तिकं प्रापय। अग्निप्रवेशनं कारयेत्यर्थः॥

कर्तव्यश्चायमर्थः स्त्रीणामित्याह—

**शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते।**
**प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥ ३३॥**

33. The moonlght goes with the Moon; with the cloud the lightning disappears; it is admitted even by inanimate beings that women go the way of their husbands.

**शशिनेति**॥ कौमुदी चन्द्रिका शशिना सह याति। शशिन्यस्तमिते स्वयं नश्यतीत्यर्थः। तडित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति। कर्तरि लट्। प्रमदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्य इत्येतद्विचेतनैः। अविवेकिभिरपीत्यर्थः। नाथस्तु 'पृथग्जनैः' इति पपाठ। प्रतिपन्नं ज्ञातम्। 'अलवणा यवागूः', 'अनुदरा कन्या' इतिवदल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः। पतिवर्त्मगा इत्यत्र स्मृतिः—'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता॥' इति॥

**अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना।**
**नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ॥ ३४॥**

34. Colouring (my) breasts with this very dear, blessed ash of the limbs of (my) dear Love, I shall place my body in fire as if on a couch of tender sprouts.

---

१ भर्तुः. २ विलीयते.

**अमुनेति** ॥ अमुना पुरोवर्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव । एवकारो मण्डनान्तरनिवृत्त्यर्थः । कषायितस्तनी रञ्जितस्तनी । 'रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे' इति वैजयन्ती । नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि । निधास्यामीत्यर्थः ॥

**कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।**
**कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥**

35. In making a couch of flowers, Oh good sir, many times you became help to us both. Now requested (by me) with hands folded in salutation, just prepare a pyre for me quickly.

**कुसुमेति** ॥ हे सौम्य साधो, त्वमावयो रतिपञ्चबाणयोर्बहुशो बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः । संप्रति प्राणिपाताञ्जलिना याचितः । अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । आशु मे चितां काष्ठचयं कुरु कुरुष्व । यथेह तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥

**तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।**
**विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥ ३६ ॥**

36. After that kindle with haste the fire placed on me (my body) by fanning (it) with the Southern (Malaya) breezes. It is already known to you that Smara is not at ease without me, even for a moment.

**तदन्विति** ॥ तच्चिताकरणमन्वनन्तरं मय्यर्पितं मदर्पितं ज्वलनमग्निं दक्षिणवातवीजनैर्मलयमारुतसंचारणैस्त्वरयेः । त्वरितं ज्वलयेत्यर्थः । त्वराहेतुमाह ते तव विदितं खलु । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । तद्योगात्कर्तरि षष्ठी । यथा येन प्रकारेण स्मरो मां विना क्षणमपि नोत्सहते न हृष्यति तथा त्वया ज्ञातमेवेत्यर्थः ॥

**इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।**
**अविभज्य परत्र तं मया सहितः पास्यति ते स बान्धवः ॥ ३७ ॥**

37. And having done this, also give (as a libation) to both of us only one cavity-ful (anjali) of water. In the other world that friend of yours will drink it with me without dividing it.

**इतीति** ॥ अपि चेत्येवं विधाय कृत्वा नावावाभ्यामेक एव सलिलस्याञ्जलिर्दीयताम् । तमञ्जलिं स ते बान्धवः सखा स्मरः परत्र परलोके मया सहितोऽविभज्य पास्यति ॥

---

१ यत्.

**परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।**
**निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥**

38. And, Oh Madana, in the obsequial rites for the sake of Smara offer clusters of blossoms with waving sprouts of the very fragrant mango tree (*sahakara*) since your friend likes the blossoms of the mango tree.

**परलोकेति** ॥ किंच हे माधव वसन्त, परलोकविधौ पिण्डोदकादिकर्मणि स्मरमुद्दिश्य विलोलाः पल्लवा यासु ताः सहकारमञ्जरीश्चूतवल्लरीर्निवपेर्देहि । हि यस्मात्कारणात्ते सखा स्मरः प्रियाश्चूतप्रसवा यस्य स तथोक्तः ॥

**इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।**
**शफरीं ह्रदशोषविक्लवां[1] प्रथमा वृष्टिरिवान्वकम्पयत्[2] ॥ ३९ ॥**

39. To Rati, thus resolved to quit her body, Speech, springing from the heavens, showed pity, like the first shower to a small fish distressed by the drying of a deep pool.

**इतीति** ॥ इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् । कृतनिश्चयामिति यावत् । रतिमाकाशभवा सरस्वत्यशरीरा वागग्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम् । 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । प्रथमा वृष्टिर्वर्षमिवान्वकम्पयदनुकम्पितवती । सदयमुवाचेत्यर्थः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः ॥

**कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।**
**शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि[3] ॥ ४० ॥**

40. Oh wife of the flower-weaponed God (Madana), your husband will not be difficult to secure (see) for long. Listen by which action he became a victim (moth) in the flames (of the fire) of Hara's eye.

**कुसुमेति** ॥ हे कुसुमायुधपत्नि रते, तव भर्ता चिराच्चिरं दुर्लभो न भविष्यति । किंत्वचिरादेव सुलभो भविष्यतीत्यर्थः । किंच शृणु । तत्कर्मेति शेषः । येन कर्मणा स ते भर्ता हरलोचनस्यार्चिर्ज्वाला । 'ज्वाला भासो नपुंस्यर्चिः' इत्यमरः । तस्मिञ्शलभत्वं पतङ्गत्वं गतः । 'समौ पतङ्गशलभौ' इत्यमरः ॥

तदेव कर्मोपाचष्टे—

**अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।**
**अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥**

---

१ विह्वलाम्. २ अन्वकम्पत. ३ हरलोचनार्चिषाम्.

41. Prajapati (the lord of creatures, Brahman) having his organs of sense aroused (by Smara) had a craving for his own daughter; then being cursed by him, after controlling his excitement he (Madana) reaped this fruit (experienced this result).

**अभिलाषेति ॥** उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेति शेषः। प्रजापतिर्ब्रह्मा स्वसुतायां सरस्वत्यामभिलाषमनुरागमकरोत्। अथ तेन प्रजापतिना विक्रियामिन्द्रियविकारं निगृह्य निरुध्याभिशप्तः सन्। एतत्फलं दाहात्मकं स्वकर्मफलमन्वभूत् ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन

**परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः।**
**उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति[1] ॥ ४२ ॥**

**इति चाह स धर्मयाचितः स्मरशापावधिदां[2] सरस्वतीम्।**
**अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥**

42. When Hara, favourably disposed to her (Parvati) will marry Parvati, then experiencing happiness, he will unite Smara with his own body.

43. And he (Brahman) uttered this speech giving the furthest limit (of time) of Smara's curse, when requested by Dharma (a Prajapati). Of both lightning and nectar (paronomastically: of anger and favour) the self-restrained and the clouds are the source.

**परिणेष्यतीति। इतीति च ॥** धर्मेण धर्माख्यप्रजापतिना याचितः प्रार्थितः स भगवान्ब्रह्मा। तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतोऽभिमुखीकृतो हरः शिवो यदा पार्वतीं परिणेष्यत्युद्वक्ष्यति तदोपलब्धसुखः प्राप्तानन्दः सन्। स्मरं कामं स्वेन वपुषा नियोजयिष्यति संगमयिष्यति। इत्येवं स्मरशापस्यावधिदामवसानदायिनीं सरस्वतीं वाचं चाह। एवं शापावधिमप्युक्तवानित्यर्थः। ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह— वशिनो जितेन्द्रियाश्चाम्बुधराश्चाशनेरमृतस्य चेत्युभयोर्योनयः प्रभवाः। वशिपक्षेऽशन्यमृतशब्दौ कोपप्रसादपरौ। अन्यत्र वैद्युताग्न्युदकपरौ। युग्मकम् ॥

**तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः।**
**रविपीतजला तपात्यये पुनरोघेन हि युज्यते[3] नदी ॥ ४४ ॥**

44. Therefore, oh beautiful (or virtuous) woman, preserve this body which is destined to have the company of (your) dear (person) in future. With the water drunk up (i.e. dried) by the Sun, the river certainly again gets united with the stream at the end of summer!

---

१ स योजयिष्यति. २ स्मरशापान्तभवाम्. ३ पूर्यते.

**तदिति** ॥ हे शोभने, तत्तस्मात्कारणाद्भवितव्यो भविष्यन्प्रियसंगमो यस्य तत्तथोक्तमिदं वपुः परिरक्ष । तथाहि । रविपीतजला नदी तपात्यये प्रावृषि । 'प्रावृट् तपात्यये' इति हलायुधः । पुनरोघेन प्रवाहेण युज्यते संगच्छते हि ॥

**इत्थं रतेः किमपि भूतमदृश्यरूपं**
**मन्दीचकार मरणव्यवसायबुद्धिम् ।**
**तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना—[२]**
**माश्वासयत्सुचरितार्थपदैर्वचोभिः ॥ ४५ ॥**

45. Thus some invisible being weakened Rati's thought of resolving to die; and relying on it the friend of the flower-weaponed (Madana) consoled her by advice in very significant words.

**इत्थमिति** ॥ इत्थमनेन प्रकारेणादृश्यरूपं किमपि भूतं कश्चित्प्राणी । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः । रतेर्मदनदाराणां मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार । निवारयामासेत्यर्थः । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । अथ कुसुमायुधबन्धुर्वसन्तश्च तत्प्रत्ययात्तस्मिन्भूते विश्वासात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमराः । एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैर्वचोभिर्वाक्यैराश्वासयत् । सर्वथा ते देवताप्रसादात्प्रियसंगमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥

**अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।[३]**
**शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥**

46. Then Rati, the wife of Madana, emaciated by the disaster, waited for the end of the calamity, just as the crescent of the Moon in daytime, having a dusky-white colour by the wasting (i.e. weakening) of rays, waits for the beginning of night (or end of day).

**अथेति** ॥ अथानन्तरं व्यसनेन दुःखेन कृशा मदनवधू रतिरुपप्लवान्तं विपदवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य । 'सायंचिरम्–' इत्यादिना ट्युप्रत्ययः । शशिनश्चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयांबभूव प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः ।

---

२एताम्. ३ प्रतिपालयांबभूव.

# कुमारसंभवम्

# KUMARASAMBHAVA

## पञ्चमः सर्गः ।

## *Canto V*

**तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।**
**निनिन्द रूपं हृदयेन पार्वती प्रियेषु[1] सौभाग्यफला हि चारुता ॥ १ ॥**

1. With her desires frustrated by Pinakin (God Shiva) thus burning the mind-born (Cupid) in her presence, Parvati condemned beauty in her mind; since elegance should result in (mutual) good fortune (in securing the firm devotion and favour of the husband and wife) in the case of lovers.

**तथेति** ॥ पर्वतस्यपत्यं स्त्री पार्वती तेन प्रकारेणाक्ष्णोः समीपे समक्षं पुरतः । 'अव्ययं विभक्तिसमीपसमृद्धि—' इत्यादिनाव्ययीभावः । मनोभवं मन्मथं दहता भस्मीकुर्वता पिनाकिनेश्वरेण भग्नः खण्डितो मनोरथोऽभिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं निनिन्द । धिङ्मे रूपं यद्धरमनोहरणाय नालमिति गर्हितवतीत्यर्थः । युक्तं चैतदित्याह—तथाहि । चारुता सौन्दर्यं प्रियेषु पतिषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता । सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते । नो चेद्विफलं तदिति भावः । अस्मिन्सर्गे वंशस्थं वृत्तम्--'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

**इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।**
**अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥**

2. She desired to render her beautiful form not fruitless (i.e. fruitful) by austerities, resorting to meditation. Or how otherwise can both — that sort of love and a husband like that—be obtained?

**इयेषेति** ॥ सा पार्वती समाधिमेकाग्रतामास्थायावलम्ब्य तपोभिर्वक्ष्यमाणनियमैः करणभूतैरात्मनः स्वस्यावन्ध्यरूपतां सफलसौन्दर्यं कर्तुमियेषेच्छति स्म । तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः । अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयमवाप्यते । किं तद्द्वयम् । तथाभूता विधा प्रकारो यस्य तत्तथाविधं प्रेम स्नेहः येनार्धाङ्गहरा हरस्य भवेदिति भावः। तादृशः पतिश्च । यो मृत्युंजय इति भावः । द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्तृवाल्लभ्यं जीवद्भर्तृकत्वं चेति । तच्च तपश्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः । अत्र मनुः--यद्दुष्करं 'यद्दुरापं यद्दुर्गं यच्च दुस्तरम् । तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥' इति ॥

---

[1] प्रिये हि.

**निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।**
**उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥**

3. And coming to know that her daughter with her mind attached to Girisha (the lord of mountains—Shiva) had made a (firm) resolve for penance, Mena having clasped her by her breast and preventing her from that great (severe) vow of ascetics said:—

**निशम्येति** ॥ मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वैनां पार्वतीं वक्षसा परिरभ्यालिङ्ग्य महतो मुनिव्रतात्तपसो निवारयन्त्युवाच । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् 'वारणार्थानामीप्सितः' इति नापादानत्वं तथापि कृतोद्यमामिति मानस-प्रवेशोक्तत्वात् 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वमेव स्यात् । यथाह भाष्यकारः–– 'यच्च मिथ्या संप्राप्य निवर्तते तच्च ध्रुवमपायेऽपादानमिति प्रसिद्धम्' इति ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह––

**मनीषिताः सन्ति गृहेषु[2] देवतास्तपः क्व वत्से क्व च तावकं वपुः ।**
**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥**

4. In the palace (itself) there are deities (Gods) wished for (by you); oh child, whither penance and where your beautiful form? A delicate Shirisha flower may suffer the step (i.e. perching) of a bee, (but) not again the foot of a bird.

**मनीषिता इति** ॥ हे वत्से, मनस ईषिता इष्टा मनीषिताः । शकन्ध्वादित्वात्साधुः । देवताः शच्यादयो गृहेषु सन्ति । त्वं ता आराधयेति शेषः । तपः क्व तवेदं तावकम् । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्प्रत्ययः । 'तवकममकावेकवचने' इति तवकादेशः । वपुश्च क्व । तथा हि । पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पद-स्थितिं सहेत । पतत्रिणः पुनः पक्षिणस्तु पदं न सहेत । अतिसौकुमार्याद्दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः । अत्र दृष्टान्तालंकारः ॥

**इति ध्रुवेच्छामनुशासती[3] सुतां शशाक मेना न नियन्तुमुद्यमात् ।**
**क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥**

---

१ गिरीशं प्रति सक्त; त्रिनेत्रं प्रति सक्त. २ गृहेऽपि. ३ व्रतेच्छाम्.

5. Thus advising her daughter, unchangeable in her resolve, Mena was not able to dissuade her from her (firm) determination. Who can cause the mind firmly resolved on (securing) the desired object, or (again) the water (rushing) towards the low ground, to turn back?

**इतीति** ॥ इत्येवमनुशासत्युपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां सुतां पार्वतीमुद्यमादुद्योगात्तपोलक्षणान्नियन्तुं निवारयितुं न शशाक समर्था नाभूत्। तथा हि। ईप्सितार्थ इष्टार्थे स्थिरनिश्चयं मनो निम्नाभिमुखं पयश्च कः प्रतीपयेत्प्रतिकूलयेत्। प्रतिनिवर्तयेदित्यर्थः। निम्नप्रवणं पय इवेष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः। अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालंकारः ॥

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी।**
**अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥ ६ ॥**

6. Once through a near friend of hers, that high-minded girl requested her father, who knew her desire, to allow her to reside in the forest for (purposes of) abstract meditation in penance ending (only) with the accomplishment of the fruit.

**कदाचिदिति** ॥ अथ कदाचिन्मनस्विनी स्थिरचित्ता सा पार्वती मनोरथज्ञमभिलाषाभिज्ञं पितरं हिमवन्तमासन्नसख्याप्तसखी सैव मुखमुपायः। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः। तेन फलोदयः फलोत्पत्तिरन्तोऽवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थमात्मनः स्वस्यारण्यनिवासं वनवासमयाचत। 'दुह्याच्—' इत्यादिना द्विकर्मकत्वम् ॥

**अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा।**
**प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥ ७ ॥**

7. Then permitted by her magnanimous father, pleased with her great resolve, (she) went to the Gauri summit (or Gauri went to the summit) which became celebrated afterwards in the world by her name and which abounded in peacocks.

**अथेति** ॥ अथ गौर्यनुरूपेण योग्येनाभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्विति कृतानुमतिः सती पश्चात्तपःसिद्ध्युत्तर-

कालं प्रजासु जनेषु तदाख्यया तस्या गौर्याः संज्ञया प्रथितम् । गौरीशिखरमिति प्रसिद्ध-मित्यर्थः । शिखण्डिमत् । न तु हिंस्रप्राणिप्रचुरमिति भावः । शिखरं शृङ्गं जगाम ययौ ॥

**विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।**
**बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥**

8. Leaving the necklace rubbing off the sandal paste by its rolling threads (of pearls), she, of unchangeable determination, put on (lit. tied) a bark garment, tawny like the young sun, with the (close) contact (of the body with the garment) upset by the high (or projecting) breasts.

**विमुच्येति** ॥ अहार्यनिश्चयाऽनिवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिर्यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्तथोक्तं वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध । धारयामासेत्यर्थः ॥

**यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।**
**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥**

9. Her face appeared even as charming by her matted hair (now) as it (used to appear) by the decorated *(prasiddha)* hair; not by the rows of bees (six-footed) alone *(eva)* does the lotus look brilliant, but also when it is in contact with the moss.

**यथेति** ॥ तस्या देव्या आननं तदाननं प्रसिद्धैर्भूषितैः । 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः । रोहन्तीति रुहाः । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । शिरसि रुहास्तैः शिरोरुहैर्मूर्धजैर्यथा मधुरं प्रियमभूत् । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । जटाभिरप्येवं मधुरमभूत् । तथा हि पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरपङ्क्तिभिरेव न किंतु सह शैवलासङ्गेन सशैवलासङ्गमपि । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । प्रकाशते । शैवलेनापि शोभत एवेत्यर्थः ॥

**प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम् ।**
**अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम् ॥ १० ॥**

10. Every moment causing bristling of hair by that triple Munja girdle, which she wore for penance, the place of the cord of her zone was made red, when it was tied there for the first time.

**प्रतीति** ॥ सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात्कृतरोमाञ्चां त्रिगुणां त्रिरावृतां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार। तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया मौञ्ज्यास्या देव्या रसनागुणस्यास्पदं स्थानं जघनम्। सह रागेण सरागं सलोहितमकारि कृतम्। सौकुमार्यातिशयादिति भावः ॥

**विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात्।**
**कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११ ॥**

11. Withdrawn from (painting) the lower lip with its red (lac) dye given up, and from the ball reddened (formerly) by the unguent of the breasts, her hand with its fingers hurt by cutting the *kusha* sprouts (or pointed *kusha* grass) was made by her to love the *aksha* rosary.

**विसृष्टेति** ॥ तया देव्या विसृष्टरागात्त्यक्तलाक्षारसरञ्जनादधरादधरोष्ठान्निवर्तितः। 'निसृष्टरागात्' इति पाठे नितरां त्यक्तलाक्षारागात्। रागत्यागेन निष्प्रयोजनत्वादिति भावः। तथा स्तनाङ्गरागेणारुणितादरुणीकृतात्। पतनसमये तस्य स्तनयोरुपरोधादिति भावः। कन्दुकाच्च निवर्तितः। कुशाङ्कुराणामादानेन लवनेन परिक्षता व्रणिता अङ्गुलयो यस्य स तथोक्तः करः पाणिरक्षसूत्रप्रणय्यक्षमालासहचरः कृतः ॥

**महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते।**
**अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥**

12. She who was (formerly) pained even by flowers in her hair dropped by rolling on the very costly bed, (now) slept with her creeper-like arm for a pillow and sat on the altar alone.

**महार्हेति** ॥ महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यते स्म। पुष्पाधिकसौकुमार्यादिति भावः। सा देवी बाहुलतामुपधत्त उपधानीकरोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमावेवाशेत शयितवती। तथा निषेदुष्युपविष्टा च। 'क्वसुश्च' इति क्वसुः। 'उगितश्च' इति ङीप्। भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥

**पुनर्ग्रहीतुं नियमस्थया तया द्वये[1]ऽपि निक्षेप[2] इवार्पितं द्वयम्।**
**लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥ १३ ॥**

---

१ द्वयीषु. २ निक्षेपम्. ३ दृष्टिम्.

13. With a view to take back again, two things were kept as a deposit by her, who was keeping a vow, with these two themselves:— with the tender creepers her graceful movement and with the female deer her tremulous sight.

**पुनरपि** ॥ नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनर्ग्रहीतुं पुनरानेतुं निक्षेपोऽर्पितमिव निक्षेपत्वेनार्पितं किमु । क्वचित् । 'द्वयीषु' इति प्रामादिकः पाठः । कुत्र द्वये किं द्वयमर्पितमित्याह—तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं चञ्चलावलोकितं च । व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्चार्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ।

**अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।**
**गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥**

14. Unwearied, she herself alone nourished the plants by pouring (water) from the breast-like pitchers; in whose case, as they were (lit. that were) born previously, Guha even would not lessen her Parvati's motherly (son-like) affection.

**अतन्द्रितेति** ॥ सा देवी स्वयमेवातन्द्रितासंजाततन्द्रा सती । तारकादित्वादितच्प्रत्ययः । वृक्षकान्स्वल्पवृक्षान् । 'अल्पे' इत्यल्पार्थे कप्रत्ययः । घटावेव स्तनौ तयोः प्रस्रवणैः प्रस्रुतपयोभिर्व्यवर्धयत् । गुहः कुमारोऽपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम् । अग्रजातानामित्यर्थः । येषां वृक्षकाणां संबन्धि पुत्रवात्सल्यं सुतप्रेम नापाकरिष्यति । उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्तिष्यत इत्यर्थः ॥

**अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।**
**यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥ १५ ॥**

15. So much did the deer, fondled (by her) by giving cavityfuls of forest seed, confide in her that, through curiosity, with their eyes she used to measure her eyes, in the presence of her friends.

**अरण्येति** ॥ अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिता हरिणाश्च तस्यां देव्यां तथा विशश्वसुर्विस्रम्भं जग्मुः । 'समौ विस्रम्भविश्वासौ' इत्यमरः यथा कुतूहलादौत्सुक्यात्तदीयैर्हरिणसंबन्धिभिर्नयनैर्नेत्रैः करणैः । स्वकीये लोचने सखीनां पुरः पुरतः । अनेन तेषां संबन्धसहत्वमुक्तम् । अमिमीत । अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः । केचित्तु सा पार्वती तदीयैर्नेत्रैः कुतूहलात्पुरोऽग्रे वर्तमानानां सांनखी

लोचने अमिमीत व्रतस्थत्वान्नात्मन इत्याहुः । 'माङ् माने' इत्यास्माद्धातोर्लङ् । इयमेव खलु विश्वासस्य पराकाष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥

तपःप्रभावमाह—

**कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।**
**दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥**

16. Desirous of seeing her who used to bathe, make offerings to fire, take a bark for her upper garment and mutter holy prayers, sages came to her; age is no consideration (lit. not considered) in the case of persons spiritually advanced.

**कृतेति** ॥ कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकाम् । कृतहोमामित्यर्थः । त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं त्वगुत्तरासङ्गवतीम् । अधीतमस्या अस्तीत्यधीतिनीं स्तुतिपाठादि कुर्वतीम् । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । तां देवीं दिदृक्षवो द्रष्टुमिच्छव ऋषयो मुनयोऽभ्युपागमन्समुपागताः । न चात्र कनिष्ठसेवादोष इत्याह—धर्मवृद्धेषु वयो न समीक्ष्यते न प्रमाणीक्रियते । सति धर्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः । तथा च मनुः—'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति ॥

**विरोधिसत्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।**
**नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥ १७ ॥**

17. With former animosity given up by hostile animals, with guests respected by the trees with welcome fruits, and with fire maintained in the inside of the new cottages, that penance-grove certainly *(cha)* became purifying.

**विरोधीति** ॥ विरोधिभिः सत्वैर्गोव्याघ्रादिभिरुज्झितपूर्वमत्सरं त्यक्तपूर्ववैरम् । हिंसारहितमित्यर्थः । द्रुमैरभीष्टप्रसवेनेष्टफलेनार्चिताः पूजिता अतिथयो यस्मिंस्तत्तथोक्तम् । नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः संचिता अनला अग्नयो यस्मिंस्तत्तथोक्तं तच्च तपोवनम् । पावयतीति पावनं बभूव । अहिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः ॥

**यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त कांक्षितम् ।**
**तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥**

---

१ सर्वसमाधिसाधनम्.

18. When she observed that by all *(tavat)* the former religious austerities, the desired result could not be achieved, then, heedless (lit. having not cared for) of the delicacy of her body, she proceeded to practise intense penance.

**यदेति** ॥ सा देवी यदा यस्मिन्काले तावता तावत्प्रमाणेन पूर्वतपःसमाधिना पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन कांक्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त। अशक्यममंस्तेत्यर्थः। तदा तत्काले। अविलम्बेनेत्यर्थः। स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्यमनपेक्ष्याविगणय्य महद्दुश्चरं तपश्चरितुं साधयितुं प्रचक्रम उपचक्रमे ॥

**क्लमं ययौ कन्दुकलीलया या तया मुनीनां चरितं व्यगाह्यत।**
**ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च[1] ससारमेव च ॥ १९ ॥**

19. The life of sages was practiced by her who used to get fatigue formerly even by a play at the ball. Certainly her body was formed (e.g. made up) of golden lotuses as it was delicate by nature and was also possessed of strength *(sara)*.

**क्लममिति** ॥ या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं प्राप तया देव्या मुनीनां चरितं तीव्रं तपो व्यगाह्यत प्रविष्टम्। अत्रोत्प्रेक्षते--ध्रुवमस्या वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम्। अत एव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठिनमेव। तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वमित्युत्प्रेक्षार्थः ॥

**शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा।**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥**

20. In summer remaining in the midst of four blazing fires, the exquisite-waisted lady with a pleasant smile stared at the sun fixing her gaze there only (lit. at no other object), after overcoming the brilliance dazzling the eyes.

**शुचाविति** ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजामग्नीनां मध्यगता सती। नेत्रं प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजो विजित्य। न विद्यतेऽन्यत्र दृष्टिर्यस्याः सानन्यदृष्टिः सती सवितारं सूर्यमैक्षत ददर्श। 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः' इति स्मरणात्। पञ्चाग्निमध्ये तपश्चचारेत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः—'अग्निः सवित सवितैवाग्निः' इति श्रौतलिङ्गात् ॥

---

1 हि. च सुसारमेव.

तथातितप्तं[1] सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥ २१ ॥

21. Thus extremely burnt by the sun's rays, her face bore the beauty of a lotus; only at the long corners of its eyes a footing was imperceptibly (lit. slowly and slowly) obtained by swartness.

**तथेति** ॥ सवितुः सूर्यस्य गभस्तिभिः किरणैस्तथा पूर्वोक्तप्रकारेण।तितप्तं संतप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः। किंत्वस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैःशनै र्मन्दंमन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम्। तयोः सौकुमार्यादित्यर्थः ॥

अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः।
बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः[2][3] ॥ २२ ॥

22. Water received wthout solicitation and the rays of the lord of constellations containing nectar formed the only means of her concluding her fast; these means were nothing else than the subsistence of trees (themselves).

**अयाचितेती** ॥ अयाचितोपस्थितमप्रार्थितोपनतं केवलमम्बूदकं रसात्मकस्यामृतमयस्योडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिरभ्यवहारकर्म बभूव। तावन्मात्रसाधनकोऽभूदित्यर्थः। साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः। किलेति प्रसिद्धौ। वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः। पारणाविधिर्न बभूव। वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसिद्धम्। अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥

निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा[4]।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥

23. Extremely scorched by the various fires — (that) moving in the sky and (that) kindled by fuel, she together with the earth emitted heat that went upwards, when sprinkled by rains at the end of summer.

**निकामेति** ॥ विविधेन पञ्चविधेनेत्यर्थः। नभश्चरेण खेचरेण। आदित्यरू-

---

१ तथाभितप्तम्; तथापि तप्तम्. २ वृक्षवृत्तिः. ३ साधनम्. ४ च.

पेणेत्यर्थः । इन्धनसंभृतेन काष्ठसमिद्धेन वह्निना निकाममत्यन्तं तप्ता साम्बिका तपात्यये ग्रीष्मान्ते । प्रावृषीत्यर्थः । नवैर्वारिभिरुक्षिता सिक्ता सती भुवा पञ्चाग्नितप्तया सहोर्ध्वगमूर्ध्वप्रसृतमूष्माणं बाष्पममुञ्चत् । 'ग्रीष्मोष्मबाष्पमूष्माणम्' इति यादवः ॥

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४ ॥**

24. Remaining for a moment on the eye-lashes, beating the lips, disintegrated by falling on the elevated breasts (lit. on the elevation of the breasts) and tumbling on the folds (on her stomach) the first drops of water (rain) reached her navel long afterwards.

**स्थिता इति** ॥ उदकस्य बिन्दव उदबिन्दवः । 'मन्थौदन-' इत्यादिनोदकशब्दस्योदादेशः । प्रथम उदबिन्दवः । प्रथमविशेषणाद्बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वं च गम्यते । तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः । तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यं च गम्यते । अनन्तरं ताडितो व्यथितोऽधर ओष्ठो यैस्ते तथोक्ताः । एतेनाधरस्य मार्दवं गम्यते । ततः पयोधरयोः स्तनयोरुत्सेध उपरिभागे निपातेन पतनेन चूर्णिता जर्जरिताः । कुचकाठिन्यादिति भावः । तदनु वलीप्रदररेखासु स्खलिताः । निम्नोन्नतत्वादिति भावः । इत्थं चिरेण न तु शीघ्रम् । प्रतिबन्धबाहुल्यादिति भावः । नाभिं प्रपेदिरे प्रविष्टा न तु निर्जग्मुः । एतेन नाभेर्गाम्भीर्यं गम्यते । अत्र प्रतिपदमर्थवत्त्वात्परिकरालंकारः ॥

**शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।**
**व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥ २५ ॥**

25. Noticing her, sleeping on rock and living without shelter in continued rain with gales at intervals, by means of glances of lightning the nights became as it were witnesses of the great penance.

**शिलाशयामिति** ॥ निरन्तरासु नीरन्ध्रास्वन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयस्तास्वन्तरवातवृष्टिषु । न निकेते गृहे वसतीत्यनिकेतवासिनीम् । अनावृतदेशवासिनीमित्यर्थः । शिलायां शेत इति शिलातलशायिनीम् । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । तां पार्वतीं साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । तस्य कर्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपास्तडिन्मयैर्विद्युद्रूपैरुन्मिषितैरवलोकनैर्व्यलोकयन्निव । इवेति चक्षुषा विलोकनमेवोत्प्रेक्ष्यते । साक्ष्यं तु 'आदित्यचन्द्रावनिलोऽनलश्च

द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥'
इति प्रमाणसिद्धत्वान्नोत्प्रेक्ष्यमित्यनुसंधेयम् ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा संप्रति हेमन्ते तपश्चरणप्रकारमाह—

**निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा।**
**परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥**

26. She passed the *Sahasya* (*Pausha* month) nights with winds shedding heavy snow, living constantly in water and pitying the pair of Chakravakas (ruddy geese) separated in her presence and crying for each other.

**निनायेति** ॥ सा पार्वती । उत्किरन्ति क्षिपन्तीत्युत्किराः । 'इगुपधज्ञा–' इत्यादिना कः । अत्यन्तं हिमानामुत्किरा अनिला यासु ताः सहस्यरात्रीः पौषरात्रीः । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः। उदके वास उदवासः। 'पेषंवासवाहनधिषु च' इत्युदादेशः। उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिन्यन्योन्यमाक्रोशिनि पुरोऽग्रे वियुक्ते विरहिणि। वियोगं प्राप्त इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोश्चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती निनाय। दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः। 'अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः' इति मनुः ॥

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना।**
**तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥**

27. At night, by her mouth having fragrance of the lotus and lovely by the leaf in the form of the trembling lower lip, she united the lotuses with the waters with their abundance of lotuses hit by the fall of snow.

**मुखेनेति** ॥ सा पार्वती निशि रात्रौ पद्मवत्सुगन्धिना सुरभिणा। 'गन्धस्येत्–' इत्यादिनेकारः। प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्रं दलं तेन शोभत इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः पद्मसंपदो यासां तासामपां सरोजसंधानं पद्मसंघट्टनमकरोदिव । इत्युत्प्रेक्षालंकारः । पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालंकारो व्यज्यत इत्युभयोः संकरः ॥

**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।**
**तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥**

---

१ अत्यर्थहिमोत्तरानिलाः. २ अपर्णामिति.

28. Subsisting on leaves of trees fallen of themselves is indeed the highest limit of penance; by her again even that was given up (crossed); hence those knowing former history call that affable lady by the name Aparna.

**स्वयमिति** ॥ स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि। 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः। तया देव्या पुनरतत्पर्णवर्तनमप्यपाकीर्णमपाकृतम्। अतः पर्णापाकरणाद्धेतोः। प्रियं वदतीति प्रियंवदा। 'प्रियवशे वदः खच्' इति खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। तां पार्वतीं पुराविदः पुराणज्ञास्तपःकरणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सापर्णेति वदन्ति। नामान्तरसमुच्चयार्थश्चकारः। स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः ॥ अत्र 'अपर्णाम्' इत्यपपाठः। इतिशब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति।

**मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।**
**तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९ ॥**

29. Day and night reducing her body as delicate as a lotus-fibre by such and other vows (or practices or austerities), she far excelled (lit. put down, surpassed) the penance which ascetics acquired with their hardy bodies.

**मृणालिकेति** ॥ मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयमंगं शरीरमेवमुक्तप्रकारतोयाग्निमध्यवासव्रतमादिर्येषां तैर्व्रतैरहश्च निशा चाहर्निशम्। समाहारे द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया। ग्लपयन्ती कर्शयन्ती सा पार्वती कठिनैः क्लेशसहैरित्यर्थः। शरीरैरुपार्जितं संपादितं तपस्विनामृषीणां तपो दूरमत्यन्तमधश्चकार तिरश्चकार। अतिशिश्य इत्यर्थः। तपस्विभिरप्येवं तपः कर्तुं न शक्यत इति तात्पर्यार्थः॥

**अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥**

30. Then wearing a skin (of a black antelope) and holding *Ashadha (palasha)* staff, skilled in speech and as it were glowing with spiritual lustre (or of spiritual eminence), a certain ascetic (lit. one wearing matted hair) entered the penance-grove, like the first stage of life in bodily form.

---

१ कोमल. २ तदङ्गम्. ३ क्षपयन्ती.

**अथेति** ॥ अथानन्तरमजिनं कृष्णमृगत्वक्। आषाढः प्रयोजनमस्येत्याषाढः पालाशदण्डः। 'पालाशो दण्ड आषाढः' इत्यमरः। 'विशाखाषाढादण्मन्थदण्डयोः' इत्यण्प्रत्ययः। तयोर्धरस्तथोक्तः प्रगल्भवाक्प्रौढवचनो ब्रह्ममयेन वैदिकेन तेजसा। ब्रह्मवर्चसेनेत्यर्थः। ज्वलन्निव स्थितः। इवशब्दो निर्धारणार्थः। कश्चिदनिर्दिष्टो जटिलो जटावान्। ब्रह्मचारीति शेषः। पिच्छादित्वादिलच्प्रत्ययः। शरीरबद्धो बद्धशरीरः। शरीरवानित्यर्थः। वाहिताग्न्यादिषु पाठात्साधुः। प्रथमाश्रमो यथा ब्रह्मचर्याश्रम इव। यथाशब्द इवार्थे। तपोवनम्। देव्या इति शेषः। विवेश प्रविष्टवान् ॥

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती।**
**भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रिया ॥ ३१ ॥**

31. Hospitable Parvati advanced towards him (to welcome him) with materials of worship in great honour. In spite of the existence of equality the actions of controlled minds are full of great respect towards excellent forms.

**तमिति** ॥ अतिथिषु साध्व्यातिथेयी। 'पथ्यतिथि–' इत्यादिना ढञ्प्रत्ययः। 'टिड्ढाणञ्–' इत्यादिना ङीप्। पार्वती तं ब्रह्मचारिणं बहुमानपूर्वया। बहुमानः पूर्वो यस्यास्तया। गौरवपूर्वयेत्यर्थः। सपर्ययार्चया। 'सपर्यार्चार्हणाः समाः' इत्यमरः। प्रत्युदियाय प्रत्युज्जगाम। कथं समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत आह—साम्ये सत्यपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु व्यक्तिविशेषेष्वतिशयितं गौरवं यासु ता अतिगौरवा अतिगौरवसहिताः क्रियाश्चेष्टा भवन्ति। प्रवर्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः ॥

**विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम्।**
**उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥**

32. Accepting the welcome done according to due rights and as if having removed his fatigue for a moment, and looking at Uma with quite a straight eye, he began to speak with (lit. not leaving) decorum:—

**विधीति** ॥ स ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामं च विनीय नाम। नामेत्यपरमार्थे। अथोमामृजुनैव विलासरहितेनैव चक्षुषा पश्यन्ननुज्झितक्रमोऽत्यक्तोचितपरिपाटीकः सन्। वक्तुं प्रचक्रमे प्रारेभे ॥

**अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते।**
**अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥**

---

२९—३० श्लोकयोर्मध्ये प्रक्षिप्तोऽयं दृश्यते—

सुराः समुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शंभुवशक्रियाक्षमम्।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजिहेतुम् ॥ १ ॥

१ प्रतिगृह्य. २ अयि. ३ अयि. ४ अयि. ( १ तदुद्वीक्ष्य. २ हेतवे. )

33. Is fuel and Kusha easily available for your rites? Are the waters congenial for the purposes of your bathing? Do you engage in (your) austerities in proportion to your strength (since) body is indeed the first means of (doing) one's duty?

**अपीति** ॥ अत्रापिशब्दः प्रश्ने । क्रियार्थं होमादिकर्मानुष्ठानार्थम् । समिधश्च कुशाश्च समित्कुशम् । 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः । सुलभमपि सुलभं कच्चित् । जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यान्यपि कच्चित् । किंच स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्तसेऽपि । देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः । युक्तं च नामैतत् खलु यस्माच्छरीरमाद्यं खलु धर्मसाधनम् । धर्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनम् । सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते । अतएव 'सततमात्मानमेव गोपयीत' इति श्रुतिः ॥

**अपि[1] त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।**
**चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥ ३४ ॥**

34. Is the sprout of these creepers, fostered by the water poured by you thriving; (sprout) that rises to resemblance with your lip (lit. covering of the teeth) (still) red though the *alaktaka* (red lac dye) is long given up?

**अपीति** ॥ त्वयावर्जितेन सिक्तेन वारिणा संभृतं जनितमासां वीरुधां लतानां प्रवालं पल्लवमनुबन्ध्यप्यनुस्यूतं किम् । यत्प्रवालं चिरोज्झितश्चिरकालत्यक्तो लाक्षारागो येन तत्तथापि पाटलम् । स्वभावरक्तमित्यर्थः ' तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससाधरेण । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । तुलां साम्यमारोहति । गच्छतीत्यर्थः । अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि 'तुल्यार्थैस्तुलोपमाभ्याम्–' इति न तृतीयाप्रतिषेधस्तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥

**अपि[2] प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।**
**य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव[3] प्रयुञ्जते ॥ ३५ ॥**

35. Oh lotus-eyed one, is your mind pleased towards the deer who, in love, take away the *Darbha* grass from your hands and who, as it were, inspire a comparison with your eyes, on account of their very unsteady eyes?

---

१ अयि. २ अयि. ३ सापत्न्यम्.

**अपीति** ॥ करस्थान्दर्भान्प्रणयेन स्नेहेनापहरन्तीति ते तथोक्तेषु । सापराधेष्विति भावः । 'करस्थदर्भप्रणयापराधिषु' इति पाठे दर्भाणां प्रणयेन प्रार्थनयापराधिषु हरिणेषु विषये ते मनः प्रसन्नमपि न क्षुभितं किम् । सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः । 'हे उत्पलाक्षि, ये हरिणाः प्रचलैश्चञ्चलैर्विलोचनैर्नेत्रैस्तवाक्षिसादृश्यं प्रयुञ्जत इवाभिनयन्तीव । प्रसन्नत्वान्मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः । 'उत्पलक्षेपचलैः' इति पाठान्तर उत्पलकम्पचलैः 'भावानयने द्रव्यानयनं' इति न्यायेन क्षिप्यमाणोत्पलचलैरित्यर्थः ॥

**यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।**
**तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥**

36. What is said, viz. that beauty is not meant for a sinful life, oh Parvati, is not a fallacious statement (has no exceptions, is true in all cases): For instance: oh wide-eyed one, your character (virtuous life, upright conduct) has become a point of advice even to the ascetics.

**यदिति** ॥ हे पार्वति, रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते । लोकैरिति शेषः । तद्वचो न व्यभिचरति न स्खलतीत्यव्यभिचारि सत्यम् । 'यत्राकृतिस्तत्र गुणाः' 'न सुरूपाः पापसमाचारा भवन्ति' इत्यादयो लोकवादा न विसंवादमासादयन्तीत्यर्थः । किमिति ज्ञायते तथाहि—हे उदारदर्शने आयताक्षि । सुरूपे इत्यर्थः । अथवोन्नतज्ञाने । विवेकवतीत्यर्थः । ते तव शीलं सद्वृत्तम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । तपस्विनामप्युपदिश्यतेऽनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं प्राप्तम् । मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः ॥

**विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।**
**यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥**

37. Not to that extent has this mountain with his family, been sanctified by the waters of the Ganges from the heaven and shining (lit. smiling) by the scattered offerings (of flowers) of the Seven sages, as by your unstained deeds.

**विकीर्णेति** ॥ एष महीधरो हिमवान् । सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । विकीर्णैः पर्यस्तैः सप्तर्षीणां संबन्धिभिर्बलिभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैर्दिवोऽन्तरिक्षाच्च्युतैर्गाङ्गैः सलिलैस्तथा न पावितः । अनाविलैरकलुषैस्त्वदीयैश्चरितैर्यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः ॥

---

१ प्रवाहिभिः.

**अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि ।**
**त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥**

38. By this (fact), oh virtuous lady, *Dharma* (righteous conduct) appears to me today to be particularly the pre-eminent among the three objects (of life), as only one is accepted and practised by you having no room for *Artha* and *Kama* (wealth and sexual desire) in your mind.

**अनेनेति** ॥ हे भाविनि प्रशस्ताभिप्राये, अनेन कारणेन धर्मः सविशेषं सातिशयमद्य मे । त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यद्यस्मात्कारणान्मनसो निर्विषयावर्थकामौ यस्यास्तस्या त्वयैको धर्म एव प्रतिगृह्य स्वीकृत्य सेव्यते । यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः, अतः सर्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥

संप्रति मनोरथं जिज्ञासुः प्रस्तौति—

**प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।**
**यतः[2] सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥**

39. You should not regard me who have been accorded a great welcome by yourself, as a stranger; since, oh lady with stooping limbs, friendship of good persons, it is said by wise men, is formed by seven paces (words or steps).

**प्रयुक्तेति** ॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परमन्यं संप्रतिपत्तुमवगन्तुं नार्हसि । हे संनतगात्रि संनताङ्गि । 'अङ्गगात्रकण्ठेभ्यः' इति वक्तव्यान्ङीप् । यतः कारणान्मनस ईषिभिर्मनीषिभिर्विद्वद्भिः । शकन्ध्वादित्वात्साधुः । सतां संगतं सख्यं सप्तभिः पदैरापद्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते । तच्चावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः । 'साप्तपदीनं सख्यम्' इति निपातनात्साधु ॥

**अतोऽत्र[3] किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।**
**अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि[4] ॥ ४० ॥**

40. Therefore, here, (in this matter), this person with boldness aroused on account of his being twice-born, has a mind to ask something to your very patient ladyship, and, oh you ascetic, if it be not a secret, be pleased to reply, (or kind enough to reply).

---

१ भामिनि. २ यथा. ३ अद्य. ४ प्रतिगोप्तुम्.

**अत इति** ॥ हे तपोधने, अतः सख्याद्धेतोरत्र प्रस्तावे बहुक्षमां बहूक्तिसहाम्, यद्वा क्षमावतीम्। भवतीं त्वां द्विजातिभावाद्ब्राह्मणत्वादुपपन्नचापलः सुलभधाष्टर्योऽयं जनः। स्वयमित्यर्थः। किंचित्प्रष्टुं मनो यस्य स किंचित्प्रष्टुमनाः प्रष्टुकामः। 'तुं काममनसोरपि' इति मकारलोपः। रहसि भवं रहस्यं गोप्यं न चेत्प्रतिवक्तुमर्हसि ॥

प्रष्टव्यमाह—

**कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः।**
**अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥ ४१ ॥**

41. Birth in the family of the first (primary) Creator (Brahman), body being as it were the beauty of the three worlds made manifest, the pleasure of wealth that needs no seeking, prime of youth — what more than this, say, can be the fruit of penance?

**कुल इति** ॥ प्रथमस्य वेधसो हिरण्यगर्भस्य कुलेऽन्ववाये प्रसूतिरुत्पत्तिः। 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः' इति ब्रह्मपुराणवचनात्। वपुः शरीरं त्रयाणां लोकानां सौन्दर्यमिवोदितमेकत्र समाहृतम्। ऐश्वर्यसुखं संपत्सुखममृग्यमन्वेषणीयं न भवति। किंतु सिद्धमेवेत्यर्थः। वयो नवम्। यौवनमित्यर्थः। अतः परमतोऽन्यत्किं तपःफलं स्याद्वद। अस्ति चेदिति शेषः। न किंचिदस्तीत्यर्थः ॥

**भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी।**
**विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि[1] त्वयि ॥ ४२ ॥**

42. On account of an unbearable offence *(anishta)* also this course of action is possible *(Nama)* in the case of proud women; but that (offence, evil or calamity) is not found, oh thin-waisted one, in your case, by my mind directed by the way of thought.

**भवतीति** ॥ दुःसहात्सोढुमशक्यादनिष्टाद्भर्त्रादिकृतादपि मनस्विनीनां धीरस्त्रीणामीदृशी तपश्चरणलक्षणा प्रतिपत्तिः प्रवृत्तिः। 'प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये' इति केशवः। भवति नाम। नामेति संभावनायाम्। विचारमार्गे प्रहितेन चेतसा चित्तेन तदनिष्टं च। हे कृशोदरि, त्वयि न दृश्यते। विचार्यमाणे तदपि नास्त्यसंभावितत्वादित्यर्थः ॥

अनिष्टाभावमेव प्रपञ्चयति—

**अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे।**
**पराभिमर्शो[2] न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥**

---

१ तनूदरि. २ परावमर्शः.

43. This form of yours is not fit to be subjected to mortification (of pride) by grief; whence humiliation in the father's house, oh lady with beautiful eye-brows? Outrage is not possible in your case by a stranger; who would stretch his hand for the tip of the serpent's jewel?

**अलभ्येति** ॥ हे सुभ्रु, इयं त्वदीयाकृतिर्मूर्तिरलभ्यो लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा तथोक्ता । दृश्यत इति शेषः । असंभावितश्चायमर्थ इत्याह--पितुर्गृहे विमाननावमानः कुतः । न संभाव्यत एवेत्यर्थः । 'सुभ्रूः कुतस्तातगृहेऽवमाननम्' इति पाठान्तरकरणं तु साध्वसमेवोक्तोपपत्तिसंभवात् । अन्यत्रापि 'सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्' इत्यादिप्रयोगदर्शनाद्वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः । न चान्यस्माद्भावीत्याह--पराभिमर्शः परधर्षणं तु तव नास्ति । पन्नगरत्नसूचये फणिशिरोमणिशलाकां ग्रहीतुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । करं हस्तं कः प्रसारयेत् सुभ्रु' इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञाप्रतिषेधात् अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति । तेन ह्रस्वः प्रामादिक इति केचित् । अन्ये तु "अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्र 'अलाबूः' 'कर्कंधूः' इत्यूकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अत एवाह वामनः—'ऊकारादप्यूङ्प्रकृतेः' इति ॥

**किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।**
**वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥**

44. Why then in your youth, a bark-garment, fit for old age, has been worn by you, discarding the ornaments? Say if the night, with the moon and the constellations bursting into view at the beginning of night is fit for the Dawn.

**किमितीति** ॥ हे गौरि, किमिति केन हेतुना यौवने त्वयाभरणान्यपास्य विहाय । वृद्धस्य भावो वार्धकम् । मनोज्ञादित्वाद्वुञ्प्रत्ययः । 'वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः । तत्र शोभत इति वार्धकशोभि वल्कलं धृतम् । प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका विभावरी रात्रिररुणाय सूर्याय कल्पते यदि अरुणं गन्तुं कल्पते किम् । वद ब्रूहि । 'क्रियार्थोपपदस्य-' इत्यादिना चतुर्थी दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं संघटत इति भावः ॥

तपःप्रयोजनं निराकर्तुमाह—

**दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।**
**अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥**

45. If you long for heaven, your effort is vain, your father's territory is (itself) the region of gods. If (you are seeking) a husband, enough of abstract meditation; the jewel does not seek, it is (itself) sought after.

**दिवमिति** ॥ दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमस्तपश्चरणप्रयासो वृथा निष्फलः। यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः । तव पितुर्हिमवतः प्रदेशाः देवभूमयः स्वर्गपदार्थाः । तत्रत्या इत्यर्थः । अथोपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसालम् । न कर्तव्यमित्यर्थः निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । तथा हि । रत्नं कर्तृ, नान्विष्यति न मृगयते । ग्रहीतारमिति शेषः । किंतु तद्रत्नं मृग्यते, ग्रहीतृभिरिति शेषः । न हि वरार्थं त्वया तपसि वर्तितव्यं किंतु तेनैव त्वदर्थमिति भावः ॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह—

**निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।**
**न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥ ४६ ॥**

46. (Your desire) has been betrayed by (your) hot sighs; nevertheless my mind is still plunged in doubt. Nobody is indeed seen fit to be wished for by you. How can there be one who is sought after and yet difficult to obtain?

**निवेदितमिति** ॥ सोष्मणा निःश्वसितेन निःश्वासवायुना निवेदितम् । चिन्तानुभावेनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह मन इति।—मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति । कुतः । ते तव। 'कृत्यानां कर्तरि वा' इति षष्ठी । प्रार्थयितव्यः प्रार्थयितुमर्ह एव न दृश्यते प्रार्थितदुर्लभः प्रार्थितो यो दुर्लभः स कथं भविष्यति । नास्त्येवेत्यर्थः ॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह—

**अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।**
**उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥**

47. Oh the youth longed for by you must be indescribably relentless, who (since he) slights your matted hair, as tawny as the tips of Kalama (rice), loosely hanging down on the region of (your) cheek (now) without the lotus on the ear for a long time!

---

१. बन्धनीर्जटाः कपोलदेशे; बन्धलम्बिनीर्जटाः कपोले.

**अहो इति** ॥ अहो चित्रम् । तवेप्सित आप्तुमिष्टो युवा कोऽपि स्थिरः कठिनः वर्तत इति शेषः । कुतः । यो युवा चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धना अतएव लम्बिन्यस्ताः श्लथलम्बिनीः कलमाः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्गला जटा उपेक्षते । यास्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः ॥

**मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।**
**शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥ ४८ ॥**

48. The mind of what sympathetic man will not be pained, seeing you extremely emaciated by the vows of ascetics, the places of (your) ornaments burnt by the sun and appearing like the crescent of the moon by day?

**मुनिव्रतैरिति** ॥ मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रमत्यन्तं कर्शितां कृशीकृतां दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्ताम् । अत एव दिवाहनि शशाङ्कलेखामिव स्थितां त्वां पश्यतः सचेतसो जीवतः कस्य पुंसो मनो न दूयते न परितप्यते । अपि तु सर्वस्यैवेत्यर्थः ॥

**अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।**
**करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥**

49. I consider your lover to be deceived by pride of his beauty, who (as he) does not for a long time make his own face the aim of this (your) eye that sees charmingly and has curved eye-lashes.

**अवैमीति** ॥ तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्यगर्वेण कर्त्रा । वञ्चितं विप्रलब्धमवैमि वेद्मि । यः प्रियश्चतुरं मधुरमवलोकत इति चतुरावलोकिनोऽरालपक्ष्मणः कुटिलरोम्णः । 'अरालं वृजिनं जिह्मम्' इत्यमरः । अस्य त्वदीयस्य चक्षुष आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति । दृष्टिपथं न गच्छतीत्यर्थः । तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः ॥

**कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥**

50. Oh Gauri, how long will you perform austerities? I also have penance accumulated in my first stage (of life). By a half of it get your desired husband; and I desire to know him well.

**क्रियदिति** ॥हे गौरि, क्रियत्किंप्रमाणकम्। किमवधिकमित्यर्थः। चिरं श्राम्यसि तपस्यसि। अत्यन्तसंयोगे द्वितीया। ममापि पूर्वाश्रमः प्रथमाश्रमो ब्रह्मचर्याश्रमस्तत्र संचितं संपादितं तपो विद्यते। अर्धश्चासौ भागश्च तेन तस्य तपसोऽर्धभागेनैकदेशेन काङ्क्षितमिष्टं वरमुपयन्तारं लभस्व। तं वरं साधु सम्यग्वेदितुं ज्ञातुमिच्छामि। यद्यसौ योग्यो भवति तदा ममापि संमतिरिति भावः ॥

**इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम्।**
**अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥**

51. Thus addressed by the twice-born, having entered into (her thoughts), she was not able to declare her wish (or her desired husband); then turning her eye, devoid of collyrium, she looked at her friend waiting by her side.

**इतीति** ॥ इतीत्थं द्विजन्मना द्विजेन प्रविश्यान्तर्गत्वा। आप्तवद्रहस्यमुद्घाट्येत्यर्थः। अभिहितोक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था नाभूत्। लज्जयेति शेषः। अथोऽनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं विवर्तितं विचालितमनञ्जनं नेत्रं व्रतवशाद्वर्जितकज्जलं नेत्रं यस्मिन्कर्मणि तत्तथैक्षत। नेत्रसंज्ञयैव प्रत्युत्तरं वाचयांचकारेत्यर्थः ॥

**सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम्।**
**यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥**

52. Her friend said to the Brahmacharin *(Varnin)*, "Listen, good sir, if you have curiosity, wherefore her body has been made by her a medium of penance like a lotus (being made a means of) keeping off heat.

**सखीति** ॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम्। 'वर्णः प्रशस्तिः' इति क्षीरस्वामी। सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम्। 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः। उवाच ब्रूते स्म। किमिति। हे साधो विद्वन्, तव कुतूहलं चेत्। श्रोतुमस्तीति शेषः। तर्हि निबोधावगच्छ। आकर्णयत्यर्थः। 'बुध अवगमने' इति धातोर्भौवादिकाल्लोट्। श्रोतव्यं किं तदाह—यस्मै लाभायेदं यदर्थम्। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या' इति वार्तिकनियमात्क्रियाविशेषणम्। एतया पार्वत्याम्भोजं पद्ममुष्णवारणमातपत्रमिव वपुः शरीरं तपःसाधनं कृतम्। तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥

'दृङ्मनःसङ्गसंकल्पो जागरः कृशताऽरतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥' इति। तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति 'इयम्' इत्यादिभिः षड्भिः श्लोकैः—

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।**
**अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥**

53. This resolute lady, having disregarded the lords of the four quarters, Mahendra and others, of exalted dignity (very rich) (Indra, Varuna, Yama and Kubera), desires to obtain as a husband Shiva who is not to be led away by beauty (as is seen) from the destruction of Madana.

**इयमिति** ॥ मानिनीन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवतीयं पार्वत्यधिश्रियोऽधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादींश्चतसृणां दिशामीशानिन्द्रयमवरुणकुबेरान् । 'तद्धितार्थ-' इत्यादिनोत्तरपदसमासः । अवमत्यावधूय मदनस्य निग्रहान्निवर्हणाद्धेतोः । अकामुकत्वादित्यर्थः । रूपेण सौन्दर्येण हार्यो वशीकरणीयो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति साधु । पतिं भर्तारमाप्तुमिच्छति । एतेन संकल्पावस्था सूचिता ॥

**असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।**
**इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥ ५४ ॥**

54. Formerly sent back by the unbearable sound of defiance *(Humkara)* and with its point not reaching Purari, (Shiva, the enemy of the three towns), the arrow of the flower-bowed (Cupid), even when his body was destroyed, hit her on her heart with a deep stroke.

**असह्येति** ॥ पुरा पूर्वमसह्येन सोढुमशक्येन हुंकारेण रौद्रेण निवर्तितः । अत एव पुरारिं हरमप्राप्तमुखोऽप्राप्तफलो विशीर्णमूर्तेर्नष्टशरीरस्यापि पुष्पधन्वनः कामस्य शिलीमुखो बाण इमां पार्वतीं हृदि व्यायतः । सुदूरावगाढ इति यावत् । तादृक्पातः प्रहारो यस्मिन्कर्मणि तत्तथाक्षिणोदकर्शत् । दग्धदेहस्यापि मार्गणो लग्नः । 'मृदुः सर्वत्र बाध्यते' इति भावः । अनेन 'विवृण्वती शैलसुतापि भावम्' ( ३ । ६८ ) इत्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितयानूद्य कार्श्यावस्था सूचिता ॥

**तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥ ५५ ॥**

55. Thenceforward, inflamed with love and with her hair grey by the sandal (mark) on the fore-head the maiden could not at all get any rest even on the solid stones of snow, in her father's house.

---

१ अवमन्य. २ स्मरारिम्. ३ अक्षणोत्.

**तदेति** ॥ तदेति च्छेदः । तदाप्रभृति । तत आरभ्येत्यर्थः । सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणया प्रभृतियोगे पञ्चमीनियमात् । पितुर्गृहे उन्मदनोत्कटमन्मथा ललाटस्थालंकारो ललाटिका तिलकः । 'कर्णललाटात्कनलंकारे' इति कन्प्रत्ययः । तस्याश्चन्दनेन धूसरा धूसरवर्णा अलकाश्चूर्णकुन्तला यस्याः सा तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसंघातास्तुषारघनास्त एव शिलास्तासां तलेषूपरिभागेष्वपि निर्वृतिं सुखं न लभते स्म । एतेनारत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापक्षे संज्वरश्च व्यज्यते ॥

**उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरियम् ।**
**अनेकशः किंनरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥ ५६ ॥**

56. When the adventures of Pinakin were being celebrated in songs, she many a time caused the *Kinnara* princesses, her companions in song on the borders of the forest, to weep by words faltering in the throat choked by tears.

**उपात्तेति** ॥ पिनाकिनः शंभोश्चरिते त्रिपुरविजयादिचेष्टित उपात्तवर्णे प्रारब्धगीतक्रमे । 'गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते' इति हलायुधः । सबाष्पे गद्गदे कण्ठे स्खलितैर्विशीर्णैः पदैः सुप्तिङन्तरूपैः करणैः । वनान्ते संगीतेन निमित्तेन सखीर्वयस्याः किंनरराजकन्यका अनेकशो बहुशोऽरोदयदश्रुमोक्षमकारयत् । हरचरितगानजनितमदनवेदनामेनां वीक्ष्य किंनर्योऽपि रुरुदुरिति भावः । अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनःपुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते । 'प्रलापो गुणकीर्तनम्' इत्यालंकारिकाः ॥

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत[1] ।**
**क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥**

57. After closing the eyes for a moment (in sleep) at nights with the three parts (still) remaining, she would wake up all of a sudden, uttering words to no visible object, like: 'Where, oh Nilakantha (Blue-throated Shiva), are your going?' and throwing the arms round an unreal object.

**त्रिभागेति** ॥ किंचेति चार्थः । शिष्यत इति शेषः । कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेषास्ववशिष्टासु यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात्तृतीयो भागस्त्रिभागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा 'शतांशः' 'सहस्रांशः' इति । त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः । हे नीलकण्ठ, क्व व्रजसि कुत्र गच्छसीत्यलक्ष्या निर्विषया वाग्वचनं यस्याः

१ विबुध्यते.

सा तथोक्ता । तथाऽसत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरोन्मादौ सूचितौ ॥

स्वप्नसादृश्यप्रतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः । तत्र स्वप्नसंदर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

**यदा[1] बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।**
**इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥**

58. "When you have been called omnipresent by the learned, how can you not realise that this person is devoted?" In these words the moon-crested (Shiva), painted by her own hands, was taunted in private by the simple girl *(Mugdha)*.

**यदेति** ॥ यदा यत इत्यर्थः । यदेति हेतावित्युक्त्वा गणव्याख्यानेऽन्यत्रोदाहृतत्वात् । त्वं बुधैर्मनीषिभिः सर्वगतः सर्वव्यापीत्युच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागिणमित्यर्थः । इमं जनम् । इममित्यात्मनिर्देशः । कथं न वेत्सि न जानासीति मुग्धया मूढया । अकिंचित्करश्चित्रगतोपालम्भ इत्यजानानयेत्यर्थः । तया स्वहस्तेनोल्लिखितश्चित्रे लिखितश्चन्द्रशेखरो रहस्येकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेपमुक्तश्च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं लज्जात्यागो व्यज्यत एव ॥

**यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती[2] ।**
**तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥**

59. And when (though) searching she did not see any way to secure that lord of the world, then with the permission of her father this one came with us to the penance-grove for austerities.

**यदेति** ॥ जगत्पतेस्तस्येश्वरस्याधिगमे प्राप्तावन्यं विधिमुपायं विचिन्वती मृगयमाणा यदा नापश्यत्तदेयं पार्वती गुरोः पितुरनुज्ञयास्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥

**द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि[3] ।**
**न च प्ररोहाभिमुखोऽपि[4] दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥**

60. Even on these trees planted by our friend herself, the witnessess of (her) penance, fruit has (by now) been seen. But her desire with reference to *(samshraya)* the moon-crested (Shiva) is not yet seen even nearing sprouting.

---

१ यतः. २ वितन्वती. ३ बद्धम् ४ न.

**द्रुमेष्विति** ॥ सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु । स्वयं रोपितेष्वित्यर्थः । तपसः साक्षिषु साक्षाद्द्रष्टृष्वेषु द्रुमेष्वपि फलं दृष्टं लब्धम् । जनितमित्यर्थः । अस्याः पार्वत्याः शशिमौलिसंश्रयश्चन्द्रशेखरविषयो मनोरथस्तु प्ररोहाभिमुखोऽङ्कुरोन्मुखोऽपि न दृश्यते । 'प्ररोहस्त्वङ्कुरः' इति वैजयन्ती । स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥

**न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।**
**तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥**

61. I do not know when he, difficult to obtain, though sought after, will approach this our friend, emaciated by penance and looked at by us with many tears (in our eyes), like Vrisha (Indra) (favouring) the ploughed land *(Sita)* imperilled by drought caused by him.

**नेति** ॥ प्रार्थितः सन्दुर्लभः प्रार्थितदुर्लभः स देवस्तपःकृशां तपसा कृशां क्षीणामत एव सखीभिरस्रोत्तरमश्रुप्रधानं यथा भवति तथेक्षितामिमां नः सखीं तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीडिताम् । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः । सीतां कृष्टभुवम् । 'सीता लाङ्गलपद्धतिः' इत्यमरः । वृषा वासव इव । 'वासवो वृत्रहा वृषा' इत्यमरः । कदाभ्युपपत्स्यते कदानुग्रहीष्यति न वेद्मि । अत्र वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्नं पदं वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥

**अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।**
**अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥**

62. Enlightened by her (friend) who knew her secret (inward thought) thus, revealing (lit. not concealing) her real state, the handsome and perpetual religious student asked Uma with the words: 'Oh gentle lady, is it so, (or) is it a joke only?", without betraying the signs of joy.

**अगूढेति** ॥ इङ्गितज्ञया पार्वतीहृदयाभिज्ञया । 'इङ्गितं हृद्गतो भावः' इति सज्जनः । तया गौरीसख्येत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं यथातथा निवेदितो ज्ञापितो निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी सुन्दरो विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किंतु नैष्ठिकत्वविशेषणेन कामित्वविरोधः । अथवा देवस्यालौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः । अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् । अयि गौरि । अयीति कोमलामंत्रणे । इदं त्वत्सखीभाषितमेवम् । सत्यं किमित्यर्थः । परिहासः केलिर्वा । 'द्रवकेलिपरीहासाः' इत्यमरः । इत्येवमुमामपृच्छत्पृष्टवान् ॥

---

१ अस्राकुलम्.

**अथाग्रहस्ते मुकलीकृताङ्गुलौ समपर्यन्ती स्फटिकाक्षमालिकाम्[1] ।**
**कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥ ६३ ॥**

63. Then placing the rosary of crystal beads in the fore-part of her hands with its fingers closed in the form of a bud, somehow the daughter of the mountain said in brief, after long arranging her words:

**अथेति** ।। अथानन्तरमद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ संपुटीकृताङ्गुलौ । अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदादिति वामनः । तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकामर्पयन्त्यामुञ्चती कथंचिन्महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्वीकृतवाक् । एतेन लज्जोपरोधो व्यज्यते । मिताक्षरं परिमितवर्णं यथा तथाभाषत बभाषे ॥

किमुवाचेत्याह—

**यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ ६४ ॥**

64. "Oh eminent among the knowers of the Vedas, it is just as you have heard. This person is striving (or eagerly expectant) for attaining high position. This penance indeed is a means of securing it; there is no want of scope (or access) to desires.

**यथेति** ॥ हे वेदविदां वर वैदिकश्रेष्ठ, त्वया यथा श्रुतं सम्यक्श्रुतम् । श्रुतार्थमेवाह—अयं जनः । स्त्रयमित्यर्थः । उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घन आक्रमण उत्सुक । किमत्रायुक्तमित्यत्राह—इदं तपस्तदवाप्तेस्तस्योच्चैःपदस्यावाप्तेः प्राप्तेः साधनं किल । किलेत्यलीके । अतितुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यज्यता-मित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह—मनोरथानां कामानामगतिरविषयो न विद्यते । न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः ॥

**अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।**
**अमङ्गलाभ्यासरतिं[2] विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥ ६५॥**

65. Then said the *Bramhacharin*, "Notorious (or famous) is Maheshwara; and still again you long for him. Considering him who takes pleasure in evil practices I dare not (na utsahe) give assent to your (choice).

---

१ मण्डलम्. २. रतम्.

**अथेति** ॥ अथ वर्गी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । आह । उवाचेत्यर्थः । 'आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः' इत्याह वामनः । किमित्याह— महेश्वरो महादेवो विदितः । मया ज्ञायत इत्यर्थः । बुध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः तद्योगात्षष्ठी च । येन त्वं प्राग्भग्नमनोरथां कृतेति भावः । पुनरेव त्वं तमीश्वरमर्थयसे तदर्थिन्येव तत्कामैव प्रवर्तसे । तत्प्रभावमनुभूयापीति भावः । अनुसरणे को दोषस्तत्राह—अमङ्गलाभ्यासेऽमङ्गलाचारे रतिर्यस्य तं यथोक्तमीश्वरं विचिन्त्य विचार्य तवानुवृत्तिमनुसरणं कर्तुं नोत्सहे । नानुमतुं शक्नोमीत्यर्थः ॥

**अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥**

66. Oh you intent on a bad object, how indeed will your hand, with the nuptial thread tied round it put up with its being held up for the first time, by the hand of Shambhu with a serpent coiled round it?

**अवास्त्विति** ॥ अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेशः परं प्रधानं यस्यास्तस्याः संबुद्धिरवस्तुनिर्बन्धपरे पार्वति, आमुक्तमासञ्जितं विवाहे यत्कौतुकं हस्तसूत्रं तद्यस्य स तेऽयं करः । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । वलयीकृताहिना भूषणीकृतसर्पेण शंभोर्महादेवस्य करेण करणभूतेन । तदेव प्रथमं तत्प्रथमम् । अपरिचितत्वादतिभयंकरमिति भावः । तच्च तदवलम्बनं ग्रहणं चेति कथं नु सहिष्यते । न कथंचिदपि सहिष्यत इत्यर्थः । अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥

**त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।**
**वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥**

67. You by yourself alone just think, if ever these two deserve to come in contact—the bride's silken garment bearing the sign of the gander and the elephant-skin discharging drops of blood.

**त्वमेवेति** ॥ हे गौरि, त्वमेव स्वयमात्मना । तावदिति मात्रार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेवोदाहृतं गणव्याख्याने । परिचिन्तय पर्यालोचय । किमिति । कलहंसलक्षणं कलहंसचिह्नम् । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । वध्वा नवोढाया दुकूलं वधूदुकूलम् । 'वधूः स्नुषा नवोढा स्त्री' इति विश्वः । तथा शोणितबिन्दून्वर्षतीति तथोक्तम् । आर्द्रमित्यर्थः । गजाजिनं च कृत्तिवासश्च । तदपि पिनाकिन इत्याशयः । एते कदाचिज्जात्वपि योगं संगतिमर्हतो यद्यर्हतः किम् । एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः ।

---

१ भुजेन.

पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते। कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव कथं संघटिष्यत इति भावः ॥

**चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते।**
**अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥**

68. What enemy even would indeed allow the foot-prints marked with the *Alaktaka-dye* of your feet used to tread on heaps of flowers in saloons (or four-pillared halls), on (the grounds of the) cemetery with scattered hair?

**चतुष्केति** ॥ चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रावकीर्णयोर्न्यस्तयोः। कुसुमास्तृतदिव्यभवनभूसंचारोचितयोरित्यर्थः। तव पादयोरलक्तकाङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि। 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतचिह्नयोः' इति विश्वः। विकीर्णा विक्षिप्ताः केशाः शवशिरोरुहा यासु तासु विकीर्णकेशासु। 'अतत्स्थं तत्र दृष्टं च' इति वचनात्। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीष्। परेतभूमिषु प्रेतभूमिषु। श्मशानेष्वित्यर्थः। परोऽपि शत्रुरपि को नामानुमन्यते। न कोऽपीत्यर्थः। नामेति कुत्सायाम्। पिनाकपाणिपाणिग्रहणे तस्य परेतभूसंचारित्वेन साहचर्यात्तवापि तत्र संचारोऽवश्यंभावीति भावः ॥

**अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत्।**
**स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥ ६९ ॥**

69. Say, what more than this may be incongruous that power of ashes from the pyre proper *(sulabha)* for the chest of the three-eyed (Shiva), will leave its mark on both of these your breasts, the proper place for yellow sandal (or saffron).

**अयुक्तेति** ॥ त्रिनेत्रवक्षः। त्र्यम्बकालिङ्गनमित्यर्थः। तव तत्संबन्धितया सुलभमपि सुप्रापं च। भवतीति शेषः। तवेति शेषे षष्ठी। 'न लोकाव्यय–' इत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात्। अतःपरमस्मात्त्रिनेत्रवक्षोलाभादन्यदयुक्तरूपमत्यन्तायुक्तं किं वद। न किंचिदित्यर्थः। 'प्रशंसायां रूपप्' इति रूपप्प्रत्ययः। कुतः। यद्यस्मात्कारणाद्धरिचन्दनास्पदे हरिचन्दनस्यास्पदे स्थानभूतेऽस्मिन्स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णं कर्तृ। पदं करिष्यति पदं निधास्यति। भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥

**इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥**

---

१ अनुमंस्यते. २ भवेत्. ३ अङ्किते.

70. This again would be another matter for laughter in your case at the very outset (or before you) that, seeing that you, who deserve to be conveyed by an excellent elephant, ride an old bull after marriage, the populace would have its face beaming with laughter.

**इयमिति** ॥ इयं च ते तव पुरत आदावेवान्या विडम्बना । परिहास इत्यर्थः । का सेत्यत्राह—ऊढया परिणीतया । वहेः कर्मणि क्तः । वारणराजहार्यया त्वयाधिष्ठितमारूढं वृद्धमुक्षाणं वृद्धोक्षम् । 'अचतुर–' इत्यादिना निपातः । विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखो भविष्यत्युपहसिष्यति यत् । इयमिति पूर्वेण संबन्धः । स्मेरेति 'नमिकम्पिस्म्यजस–' इत्यादिना रप्रत्ययः ॥

**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः[1] ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥**

71. Now two things are reduced to a state of being pitied on account of the desire of union with Pinakin viz. that (celebrated) beautiful digit of the moon (lit. possessor of digits) as well as you, moonlight to the eyes of the world.

**द्वयमिति** ॥ पिनाकिन ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया । क्रियमाणयेति शेषः । संप्रति द्वयं शोचनीयतां शोच्यत्वं गतम् । किं तदाह—सा प्रागेव हरशिरोगता । अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा। तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते' इति । कान्तिमती । नित्ययोगे मतुप् । कलावतश्चन्द्रस्य कला षोडशो भागश्चास्य लोकस्य नेत्रकौमुदी । नेत्रानन्दिनीत्यर्थः । त्वं च । कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागेकैव शोच्या । संप्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥

'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥' इति लोकानामाभाषणम् । तत्र किंचिदपि नास्तीत्याह—

**वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।**
**वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ७२ ॥**

72. Body possessed of deformed eyes (i.e. an unusual number of eyes), possession of unknown birth (obscurity of origin), wealth betrayed by (his) being unclothed (stark-naked, lit. having only the directions for his clothing); taken singly even (*vyastam*) is there anything in the three-eyed (Shiva) that is sought after in bride-grooms, oh lady possessing the eyes of a young deer?

---

१ कपालिनः.

**वपुरिति** ॥ वपुस्तावदस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य तद्विरूपाक्षम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । वैरूप्यं च त्रिनेत्रत्वादिति क्षीरस्वामी । अतो न सौन्दर्यवार्तापीत्यर्थः । अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता । कुलमपि न ज्ञायत इत्यर्थः । 'अलक्षिता जनिः' इति पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । वसु वित्तं दिगम्बरत्वेनैव निवेदितम् । नास्तीति ज्ञापितमित्यर्थः । यदि वित्तं भवति तदा कथं दिगम्बरो भवति । अतो ज्ञेयं निर्धनोऽयमिति । किं बहुना हे बालमृगाक्षि पार्वति, वरेषु वोढृषु । 'वरौ जामातृवोढारौ' इति विश्वः । यद्रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत्त्रिलोचने त्र्यम्बके व्यस्तम् । एकमपि समस्तं नाभूदिति भावः । अस्ति किम् । नास्त्येवेत्यर्थः ॥

**निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।**
**अपेक्ष्यते[1] साधुजनेन वैदिकी श्मशानशूलस्य न[2] यूपसत्क्रिया ॥ ७३ ॥**

73. Take away your mind from this bad desire; where his sort and where you possessing auspicious (bodily) marks? The Vedic consecration of a sacrificial post in the case of an impaling stake is not liked *(apekshyate)* by righteous (or virtuous) people!

**निवर्तयेति** ॥ अस्मादसदीप्सितादनिष्टमनोरथान्मनो निवर्तय निवारय । सः पूर्वोक्ता विधा प्रकारो यस्य स तथोक्तः । अमङ्गलशील इत्यर्थः । क्व । महदन्तरमित्यर्थः । पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वं च क्व । अतो न तवायमर्ह इत्यर्थः । तथा हि । साधुजनेन । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः । श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोर्वैदिकी वेदोक्ता । यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारो यूपसत्क्रिया नापेक्ष्यते नेष्यते । यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटस इति तात्पर्यार्थः ॥

**इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।**
**विकुञ्चितभ्रूलतम्[3] आहिते तया विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥**

74. Upon the twice-born thus speaking adversely, her eyes red at the corners were turned obliquely with a contraction of the creeper-like eyebrows, by her whose anger was recognizable by her throbbing lower lip.

---

१ अपेक्षते. २ हि. ३ भ्रूलतया.

**इतीति** ॥ इत्येवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेनाधरेणाधरोष्ठेन लक्ष्योऽनुमेयः कोपः क्रोधो यस्यास्तथोक्तया तया पार्वत्योपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिंस्तत्तथा । सभ्रूभङ्गमित्यर्थः । तिर्यक्साच्याहिते निहिते । अनादरात्तिर्यगैक्षतेत्यर्थः ॥

**उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।**
**अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ७५ ॥**

75. And she spoke to him— 'In reality you indeed do not know Hara, since you speak to me thus. The dull-witted (or weak-brained) persons hate (dislike) the behaviour of great souls, uncommon in the world and incomprehensible in motive.

**उवाचेति** ॥ अथैनं ब्रह्मचारिणमुवाच च । किमिति । परमार्थतस्तत्त्वतो हरं न वेत्सि न जानासि नूनम् । कुतः । यतो मामेवमुक्तया रीत्यात्थ ब्रवीषि । 'ब्रुवः पञ्चानामदितः—' इति रूपसिद्धिः । अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह—मन्दा मूढाः । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । लोकसामान्यमितरजनसाधारणं न भवतीत्यलोकसामान्यमचिन्त्यहेतुकं दुर्बोधकारणकं महात्मनां चरितम् । द्विषन्ति हेत्वपरिज्ञानाद्दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥

संप्रति 'अमङ्गलाभ्यासरतिम्' [५।६५] इत्याद्युक्तं दूषणजातम् 'विपद्' इत्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ॥**

76. By one intent on the prevention (or counteraction) of evil, good is resorted to, or by one very anxious of prosperity (or fortune). Being the refuge of the world and being without any desire what has he to do with these (auspicious things) which contaminate the functions of the soul by hopes.

**विपदिति** ॥ विपत्प्रतीकारपरेण । अनर्थपरिहारार्थिनेत्यर्थः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । भूतिसमुत्सुकेनैश्वर्यकामेन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते । शरणे रक्षणे साधुः शरण्यः । 'तत्र साधुः' इति यत्प्रत्ययः । 'शरणं गृहरक्षित्रोः' इत्यमरः । जगतः शरण्यस्तस्य जगच्छरण्यस्य निराशिषो निरभिलाषस्य सतः शिवस्य । 'आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयोः' इति शाश्वतः । आशया तृष्णयोपहता दूषितात्मवृत्तिरन्तःकरणवृत्तिर्येषां तैरेभिर्मङ्गलैः किम् । वृथेत्यर्थः । पूर्वं मङ्गलमित्ये-

कवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते। इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः। तदुभयासंसृष्टस्य तु यथाकथंचिदास्ताम्। को दोष इत्यर्थः। एतेन 'अमङ्गलाभ्यासरतिम् [ ५।६५ ] इत्युक्तं प्रत्युक्तम् ॥

**अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः।**
**स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७ ॥**

77. Being (voluntarily) penniless, he is the source of riches; dwelling in a cemetery, the lord of the three worlds; possessed of a terrific form (even), he is called Shiva (auspicious, propitious, tender). There are no (persons) who know the real nature (character) of Pinakin.

**अकिंचनेति** ॥ स हरः। न विद्यते किंचन द्रव्यं यस्य सोऽकिंचनो दरिद्रः सन् संपदां प्रभवत्यस्मादिति प्रभवः कारणम्। पितृसद्मगोचरः श्मशानाश्रयः सन् त्रयाणां लोकानां नाथः। 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः। स देवो भीमरूपो भयंकराकारः सन् शिवः सौम्यरूप इत्युदीर्यत उच्यते। अतः पिनाकिनो हरस्य यथाभूतोऽर्थो यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदो न सन्ति। लोकोत्तरमहिम्नो निर्लेपस्य यथाकथंचिदवस्थानं न दोषायेति भावः। एतेन 'अवस्तुनिर्बन्धपरे' ( ५। ६६ ) इति परिहृतं वेदितव्यम् ॥

देवस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा।**
**कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥ ७८ ॥**

78. Decorated by ornaments or wrapped in snakes, wearing an elephant's skin or using a silken garment, wearing skulls or having the moon as the crest — whatever it be —the form of the omnipresent (having all forms or all-pervading) cannot be determined accurately (or perceived).

**विभूषणेति** ॥ विश्वं मूर्तिर्यस्येति विश्वमूर्तेरष्टमूर्तेः शिवस्य वपुः शरीरं भूषणैरुद्भासत इति भूषणोद्भासि स्यात्। पिनद्धभोग्यामुक्तभुजंगमं वा स्यात्। पिनद्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। गजाजिनालम्बि स्यात्। अथवा दुकूलधारि स्यात्। कपालमस्यास्तीति कपालि ब्रह्मशिरःकपालशेखरं वा स्यात्। इन्दुशेखरं वा स्यात्। नावधार्यते न निर्धार्यते। सर्वं संभवतीत्यर्थः। एतेन 'त्वमेव तावत्' ( ५। ६७ ) इति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥

---

१ स लोकनाथः. २ अथ चन्द्रशेखरम्.

'अयुक्तरूपं किमतःपरं वद' (५।६९) इति श्लोकोक्तं प्रत्याह—

**तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये।**
**तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसां ॥ ७९ ॥**

79. Having gained contact with (any of) his limbs, the powder of the ashes from the pyre becomes certainly fit for purification; for (that same powder) dropped down in the act of gesticulation in dancing is smeared by the heads of the heaven-dwellers (Gods even).

**तदिति** ॥ तस्य शिवस्याङ्गं तस्य संसर्गमवाप्यासाद्य चिताभस्मैव रजो विशुद्धये कल्पते। अलं पर्याप्नोतीत्यर्थः। अलमर्थयोगात् 'नमःस्वस्तिस्वाहा-' इत्यादिना चतुर्थी। ध्रुवं शोधकत्वम्। प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह—तथा हि। प्रसिद्धमेवेत्यर्थः। नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितम्। चिताभस्मरज इति शेषः। अम्बरौकसां देवानां मौलिभिर्विलिप्यते ध्रियते। अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ॥

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु' (५। ७२) 'इयं च तेऽन्या पुरतो विडम्बना' (५। ७०) इत्यादि च तत्रोत्तरमाह—

**असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा।**
**करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥ ८० ॥**

80. Having the rutting (Eastern) quarter elephant for his vehicle, Indra (Vrisha) approaching by the crown of his head the feet of the penniless (Shiva) riding the bull, renders their toes red by the pollen of the full-blown flowers of the coral trees *(Mandara)*.

**असंपद इति** ॥ प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः। ऐरावतेनोढ इत्यर्थः। वृषा देवेन्द्रोऽसंपदो दरिद्रस्य वृषेण गच्छतो वृषभारूढस्य तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य। प्रणम्येत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुलयो ययोस्तौ तथोक्तौ करोति। दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः किं संपदा वृषारोहणे वा को दोष इत्यर्थः ॥

यदुक्तं 'वपुर्विरूपाक्षमलक्ष्यजन्मता' (५। ७२) इति तत्रोत्तरमाह—

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥**

---

१ संस्पर्शम्, २ विलुप्यते.

81. Even while wishing to speak of blemishes (only), you of an evil mind did speak one good thing of the Lord *(Isha)*. How will he who, they lay down, is the cause of even the self-born (Brahman), be traceable in his birth?

**विवक्षतेति** ॥ च्युतात्मना नष्टस्वभावेनात एव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वयेशं प्रत्येकम् 'अलक्ष्यजन्मता' इत्येतदेकम् । वच इत्यर्थः । साधु भाषितं सम्यगुक्तम् । कुतः । यमीश्वरमात्मभुवोऽपि ब्रह्मणोपि । 'ब्रह्मात्मभूः सुरज्येष्ठः' इत्यमर. । कारणमामनन्त्युदाहरन्ति । विद्वांस इति शेषः । 'पाघ्राध्मास्थाम्नादाण्–' इत्यादिना मनादेश स ईश्वरः कथं लक्ष्यप्रभवो लक्ष्यजन्मा भविष्यति । अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कश्च नान्विष्यत इत्यर्थः ॥

**अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥**

82. Enough of discussion; let him be entirely of a nature *(tathavidha)* you have heard him to be. My heart, influenced solely by the one sentiment of (sincere) love is firmly attached here (to him); an independent (or self-willed) person does not care for (or take into account) blame (censure or reproach) (or the course of love does not take censure into consideration).

**अलमिति** ॥ अथवा विवादेन कलहेनालम् । त्वया यथा येन प्रकारेण स ईश्वर श्रुतोऽशेषं कार्त्स्न्येन तथाविधस्तावत्प्रकार एवास्तु । मम मनस्त्वत्रेश्वरे भावः शृङ्गार एकोऽद्वितीयो रस आस्वाद्यो यस्य तत्तथा स्थितम् । तथा हि । कामवृत्तिः स्वेच्छाव्यवहारी वचनीयमस्थानसङ्गापवादं नेक्षते न विचारयति । न हि स्वेच्छासंचारिणो लोकापवादाद्बिभ्यन्तीति भावः ॥

**निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥८३॥**

83. Oh friend, let this lad (or young *Brahmacharin)* desirous of speaking something again with his upper and under lip throbbing, be prevented (from speaking). Not only he who abuses great men, but also he who hears it from him, is a sinful person.

---

१ श्रुतम्. २ महतां विभाषते.

'अयुक्तरूपं किमतःपरं वद' ( ५ । ६९ ) इति श्लोकोक्तं प्रत्याह—

**तदङ्गसंसर्ग[1]मवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।**
**तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते[2] मौलिभिरम्बरौकसां ॥ ७९ ॥**

79. Having gained contact with (any of) his limbs, the powder of the ashes from the pyre becomes certainly fit for purification; for (that same powder) dropped down in the act of gesticulation in dancing is smeared by the heads of the heaven-dwellers (Gods even).

**तदिति** ॥ तस्य शिवस्याङ्गं तस्य संसर्गमवाप्यासाद्य चिताभस्मैव रजो विशुद्धये कल्पते । अलं पर्याप्नोतीत्यर्थः । अलमर्थयोगात् 'नमःस्वस्तिस्वाहा–' इत्यादिना चतुर्थी । ध्रुवं शोधकत्वम् । प्रमाणसिद्धमित्यर्थः । प्रमाणमेवाह—तथा हि । प्रसिद्धमेवेत्यर्थः । नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितम् । चिताभस्मरज इति शेषः । अम्बरौकसां देवानां मौलिभिर्विलिप्यते ध्रियते । अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ॥

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु' ( ५ । ७२ ) 'इयं च तेऽन्या पुरतो विडम्बना' ( ५ । ७० ) इत्यादि च तत्रोत्तरमाह--

**असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।**
**करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥ ८० ॥**

80. Having the rutting (Eastern) quarter elephant for his vehicle, Indra (Vrisha) approaching by the crown of his head the feet of the penniless (Shiva) riding the bull, renders their toes red by the pollen of the full-blown flowers of the coral trees *(Mandara)*.

**असंपद इति** ॥ प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः । ऐरावतेनोढ इत्यर्थः । वृषा देवेन्द्रोऽसंपदो दरिद्रस्य वृषेण गच्छतो वृषभारूढस्य तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य । प्रणम्येत्यर्थः । विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुलयो ययोस्तौ तथोक्तौ करोति । दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः किं संपदा वृषारोहणे वा को दोष इत्यर्थः ॥

यदुक्तं 'वपुर्विरूपाक्षमलक्ष्यजन्मता' ( ५ । ७२ ) इति तत्रोत्तरमाह--

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥**

---

१ संस्पर्शम्. २ विलुप्यते.

81. Even while wishing to speak of blemishes (only), you of an evil mind did speak one good thing of the Lord *(Isha)*. How will he who, they lay down, is the cause of even the self-born (Brahman), be traceable in his birth?

**विवक्षतेति** ॥ च्युतात्मना नष्टस्वभावेनात एव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वयेशं प्रत्येकम् 'अलक्ष्यजन्मता' इत्येतदेकम्। वच इत्यर्थः। साधु भाषितं सम्यगुक्तम्। कुतः। यमीश्वरमात्मभुवोऽपि ब्रह्मणोपि। 'ब्रह्मात्मभूः सुरज्येष्ठः' इत्यमरः। कारणमामनन्त्युदाहरन्ति। विद्वांस इति शेषः। 'पाघ्राध्मास्थाम्नादाण्–' इत्यादिना मनादेश स ईश्वरः कथं लक्ष्यप्रभवो लक्ष्यजन्मा भविष्यति। अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कश्च नान्विष्यत इत्यर्थः ॥

**अलं विवादेन यथा श्रुतस्त्वया[1] तथाविधस्तावदशेषमस्तु सः।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥**

82. Enough of discussion; let him be entirely of a nature *(tathavidha)* you have heard him to be. My heart, influenced solely by the one sentiment of (sincere) love is firmly attached here (to him); an independent (or self-willed) person does not care for (or take into account) blame (censure or reproach) (or the course of love does not take censure into consideration).

**अलमिति** ॥ अथवा विवादेन कलहेनालम्। त्वया यथा येन प्रकारेण स ईश्वर श्रुतोऽशेषं कार्त्स्न्येन तथाविधस्तावत्प्रकार एवास्तु। मम मनस्त्वत्रेश्वरे भावः श्रृङ्गार एकोऽद्वितीयो रस आस्वाद्यो यस्य तत्तथा स्थितम्। तथा हि। कामवृत्तिः स्वेच्छाव्यवहारी वचनीयमस्थानसङ्गापवादं नेक्षते न विचारयति। न हि स्वेच्छासंचारिणो लोकापवादाद्बिभ्यन्तीति भावः ॥

**निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः।**
**न केवलं यो महतोऽपभाषते[2] शृणोति तस्मादपि यः स पापभाक् ॥८३॥**

83. Oh friend, let this lad (or young *Brahmacharin)* desirous of speaking something again with his upper and under lip throbbing, be prevented (from speaking). Not only he who abuses great men, but also he who hears it from him, is a sinful person.

---

१ श्रुतम्. २ महतां विभाषते.

**निवार्यतामिति** ।। हे आलि सखि । 'आलिः सखी वयस्या च' इत्यमरः । स्फुरितोत्तराधरः स्फुरणभूयिष्ठौष्ठोऽयं बटुर्माणवकः पुनः किमपि विवक्षुर्वक्तुमिच्छुः । ब्रुवः सन्नन्तादुप्रत्ययः । निवार्यताम् । तर्हि वक्तुमेव कथं न ददासीत्याह--तथा हि । यो महतः पूज्यानपभाषतेऽपवदति न केवलं स पापभाग्भवति । किंतु तस्मादपभाषमाणात्पुरुषाद्यः शृणोति सोऽपि पापभाक् । भवतीति शेषः । स्मृतिः—'गुरोः प्राप्तः परीवादो न श्रोतव्यः कथंचन । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥' इति ॥

संप्रति गन्तव्यपक्षमाश्रयते—

**इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥ ८४ ॥**

84. 'Or I shall (myself) go from this place,' thus saying the maiden started with her bark garment torn on her breast (on account of her great speed, or slipping down from her breasts). And now assuming his own form, Shiva (lit. possessing the sign or symbol of an excellent bull) seized her with a smile.

**इत इति** ॥ अथवेतोऽन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला रयवशात्कुचस्रस्तचीरा बाला पार्वती चचाल । वृषराजकेतनो वृषभध्वजश्च स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् तां पार्वतीं समाललम्बे जग्राह ॥

**तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-**
**र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।**
**मार्गाचलव्यतिकराकुलितेव सिन्धुः**
**शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥**

85. Seeing him, tremulous, her slender body perspiring, holding up the foot raised up for putting down (again), the daughter of the overlord of mountains *(Himalaya)* did neither proceed, nor stand, like a river confounded by the obstruction *(Vyatikara)* of a mountain in her course.

**तमिति** ॥ तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री । महादेवदर्शनेन देव्याः सात्विकभावोदय उक्तः । निक्षेपणायान्यत्र विन्यासायोद्धृतमुत्क्षिप्तं पदमङ्घ्रिमुद्वहन्ती शैलाधिराजतनया पार्वती मार्गेऽचलस्तस्य व्यतिकरेण समाहत्या । अवरोधनेनेति यावत् । आकुलिता संभ्रमिता सिन्धुर्नदीव । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । न ययौ न तस्थौ लज्जयेति भावः । वसन्ततिलकावृत्तमेतत् ॥

---

१ रय. २ निक्षेप एव.

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

86. 'From today onwards, Oh lady with stooping limbs, I am your slave, bought (won) by your austerities.' When the moon-crested (Shiva) was thus speaking, at once (ahnaya) she forgot (lit. killed or gave up) all her fatigue arising from her (voluntary) vows; since suffering (even) again produces freshness after success *(phala)*.

**अद्येति** ॥ चन्द्रमौलौ शिवे। हे अवनताङ्गि पार्वति, अद्यप्रभृति। अस्माद्दिनादारभ्येत्यर्थः। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। तव तपोभिः क्रीतः। 'दासृ दाने'। दासत आत्मानं ददातीति दासोऽस्मीति वादिनि वदति सति। सा देव्यह्नाय सपदि। 'स्रागञ्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः। नियमजं तपोजन्यं क्लमं क्लेशमुत्ससर्ज। फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः। तथा हि। क्लेशः फलेन फलसिध्या पुनर्नवतां विधत्ते पूर्ववदेवाक्लिष्टतामापादयततीत्यर्थः। सफलः क्लेशो न क्लेश इति भावः॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः।

---

# NOTES

## *Canto I*

*Argument*— This Canto contains a description of the Himalaya mountain (Verses 1-17), the marriage of Himalaya with Mena, the birth of his son Mainaka, and his daughter, who was formerly Sati, later named Uma. (18-30). The charm of Parvati is described (21-49) and Narda foretells her future marriage with Shiva. Shiva's penance is next described, and history of Sati's immolation follows. Himalaya sends his daughter with her friend to propitiate Shiva who allows it. (50-60).

1. Read उत्तरस्यां दिशि हिमालयः नाम देवतात्मा नगाधिराजः पूर्वापरौ तोयनिधी ( अ ) वगाह्य पृथिव्याः मानदण्डः इव स्थितः अस्ति.

The name of the poem is *Kumarasambhavam* ( कुमारस्य संभवः। स एव अभेदोपचारात् कुमारसंभवं काव्यम् ) "The Birth of Kumara," which is itself the subject of the poem. By a metaphorical identification with the subject of the poem the name becomes an adjective; therefore *Kumarasambhavam Kavyam.* This is a *Mahakavya,* for the characteristics of which see introduction. According to Sanskrit rhetoricians a mahakavya should begin with a blessing or a salutation or a reference to the plot. In this poem there is reference to the plot *i.e.* Vastunirdesha in that Himalaya is referred to. Arunagiri remarks हिमवांश्चात्र प्रबन्धे पताकानायकः. There has to be a *mangala at the* beginning of every work according to an old practice. *Patanjali* says in his *Mahabhashya:*

माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते।

When the *Kavyas* are so introduced they become well published, they conduce to the production of heroes in the country, give long life and everything becomes auspicious for the student. In the commentary on the *Tarkasamgraha* Annambhatta discusses this and raises objections. He says that in the beginning of works like the *Kadambari* of Bana, there was a *mangala,* but the book remained unfinished! Works like Kiranavali were finished in spite of the absence of a *mangala.* But leaving aside the merits of it one should begin

with a *mangala* as a matter of practice. The *Shishtas* have done it and nothing would be lost. (See दीपिका:—मङ्गले कृतेऽपि कादम्बर्यादौ निर्विघ्नसमाप्त्यदर्शनात् मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात्...ननु मङ्गलस्य कर्तव्ये किं प्रमाणमिति चेन्न । शिष्टाचारानुमितिश्रुतेरेव प्रमाणत्वात् । समाप्तिकामः मङ्गलमाचरेदिति श्रुतेः । ); see दण्डिन् in his काव्यादर्श.

In the Raghuvamsha only our poet has observed this practice of beginning with a *mangala*. Elsewhere he does it by *Vastunirdesha* only. Some say that Kalidasa observed the *mangala in his mind* and then began his other works. Again it can be said that the word *Devatatma* is a देवतावाचक शब्द and hence denotes auspiciousness. Cf. देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निंद्याः स्युः ॥

**उत्तरस्यां दिशि** indicates the divine regions of the North. (Cf. पितुः प्रदेशास्तव देवभूमयः V.). The word *Devatatma* justifies the acts of Himalaya like his marriage with Mena, the birth of Parvati from them both etc., as they refer to actions of animate beings while Himalaya was really inanimate.

Himalaya is one of the Varshaparvatas as mentioned in the Puranas:
( **हिमवान्** हेमकूटश्च निषधो मेरुरेव च । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः ॥ )
Also see Vishnu Purana, II 2. 10. "Snow-abode." Himachala or Himadri are also its names; "Snow-ranges." **पूर्वापरौ** The Eastern and the Western. Cf. the remark about *Hemakuta* in *Shakuntala:* कतमोऽयं पूर्वापरसमुद्रावगाढःसानुमानालोक्यते S. 7. See the quotation of Mallinatha from *Brahmapurana*. **वगाह्य** is really अवगाह्य ( अव + गाह् ) The अ is dropped according to the opinion of *Bhaguri*. According to him the अ of अव and अपि may be dropped optionally: वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः (Sid Kau.). See Panin II. 4, 82 **मानदण्ड** a rod for measuring or a rod which is itself a measure. For the earth a very big measure was required and because ordinary measures of length could not serve the purpose, the Himalaya was as if "punishing the pride" (of *Prithvi)*.

**अधिराज** explained as अधिकः राजा and becomes *Adhiraja* a word ending in अ, after अ comes in by the rule ' राजाहः सखिभ्यष्टच् '. The metre in this canto is Upajati (1-59) a mixture of *Indravajra* and *Upendravajra.* See the definitions quoted by Mallinatha. Verse 60 is in Malini—
ननमयययुतेयं **मालिनी** भोगिलोकैः ।

2. From this verse the poet begins the description of the Himalaya. Read दोहदक्षे मेरौ दोग्धरि स्थिते सर्वशैलाः यं वत्सं परिकल्प्य पृथूपदिष्टां धरित्रीं भास्वन्ति रत्नानि महौषधीः च दुदुहुः. **शलौः** mountains. **परिकल्प्य** Having fixed upon (Himalaya as the calf) **मेरौ**.... a fabulous mountain round which all planets are said to revolve and which forms the centre of the several *Dwipas.* It is said to consist of gems and gold. See MB. Vanaparva ch. 163. **दोग्धरि** (When Meru became) the milkman. The suggestion in making Himalaya the calf and Meru the milkman is that the former is a great mountain and that it received all precious things like jewels etc. from the earth, whose treasures were milked. The first claimant to the cow's milk is the calf, which therefore must get the best part. **रत्नानि** supposed to be five, nine or fourteen. *Pancharatnas* are कनकं हीरकं नीलं पद्मरागश्च मौक्तिकम्, also mentioned as नीलकं, वज्रकं, पद्मरागः, मौक्तिकं and प्रवालं or again as सुवर्ण, रजतं, मुक्ता, राजावर्तं, प्रवालकम्. The *Navaratnas* are: मुक्तामाणिक्यवैदूर्यगोमेदा वज्रविद्रुमौ । पद्मरागो मरकतं नीलश्चेति यथाक्रमम्, while the चतुर्दशरत्नs are लक्ष्मीः कौस्तुभपारिजातकसुरा धन्वंतरिश्चन्द्रमा गावः कामदुघाः सुरेश्वरगजो रंभादिदेवांगनाः । अश्वः सप्तमुखो विषं हरिधनुः शंखोऽमृतं चाम्बुधे रत्नानीह चतुर्दश प्रतिदिनं कुर्युः सदा मंगलम् But here obviously the Pancharatnas or Navaratnas seem to be meant. Mallinath takes it to mean the best of a species according to Yadava. **भास्वन्ति** shining, luminous. **पृथूपदिष्टां** as indicated by Prithu. Prithu was the son of Vena. He was wicked and troubled everybody. He was beaten to death and from his dead body was produced Prithu, who succeeded his father. There was a famine and the earth withheld food from people who petitioned to him. He took up his bow to compel the earth to yield the much needed supply. She assumed the form of a cow, entreated him to spare her and

promised to restore everything through a calf. Svayambhuva Manu became the calf. (Cf. Vishnu Purana I. 13). दुदुहः has two objects (see Sutra quoted by Mallinath): धरित्रीम् and रत्नानि.

3. If it is objected that due to the inaccessibility of Himalaya all this Wealth is useless, the poet now says that snow just heightened Himalayas glory only.

**Read**: अनन्तरत्नप्रभवस्य यस्य हिमं सौभाग्यविलोपि न जातम्, एकः दोषः हि गुणसंनिपाते इन्दोः अङ्कः किरणेषु इव निमज्जति. **अनन्तरत्नप्रभवस्य** Himalaya is a treasure-house of all jewels. Narayana says: उमाख्यस्य कन्यारत्नस्य, वैदूर्यादीनां मणिरत्नानां देवदारुप्रभृतीनां वृक्षरत्नानां मृतसंजीवनी-प्रभृतीनाम् औषधिरत्नानां गङ्गादीनां सरिद्रत्नानां सोमलताप्रभृतीनां यज्ञरत्नानां च प्रभवः। But there was one drawback in all this, and it was the impassability of the mountain due to its snow. But this defect was made good by the other qualities of this mountain and hence it did not detract from its glory.

**गुणसंनिपाते** Among a host of good qualities. **इन्दोः** of the moon. **अङ्कः** the spot on the moon. The second line is a good *subhashita*. It has been criticised by many and another *subhashita* based on this reads एकोऽहि दोषो गुणसंनिपाते निमज्जतीन्दोरिति यो बभाषे। नूनं न दृष्टं कविनापि तेन दारिद्र्यदोषो गुणराशिनाशी॥ Jagannatha also in his Rasagangadhara says अमितगुणोऽपि पदार्थो दोषेणैकेन निंदितो भवति। निखिलरसायनराजो गन्धेनोग्रेण लशुन इव॥

4. Read: यः च अप्सरोविभ्रममण्डनानां संपादयित्रीं बलाहकच्छेदविभक्तरागाम् अकालसन्ध्याम् इव धातुमत्तां शिखरैः बिभर्ति. The Himalaya is a rich source of all treasures including the minerals. Himalaya provided all this treasure for the toilet of the divine ladies. The mineral colours were reflected in the clouds. On this account they appeared to present a spectacle of an untimely evening. **अप्सरस्** These are a class of divine damsels who reside in the sky and are regarded as the wives of the Gandharvas. They are very fond of bathing, can change their shapes and are endowed with superhuman power. They are called *svarveshyas* and are usually described as servants of Indra, who, when alarmed by the rigo-

rous austerities of sages, sends down one or many of them to disturb their penance and their mission is generally successful. They are described as coveting heroes who die gloriously on the battle-field. There are according to Bana 14 different families. In Rigveda (X. 123.5) an *Apsaras* is described as going with a smiling face to her paramour. The Atharvaveda supplies more information: they tempt others by love (IV. 13, 1), they dance (IV. 37, 77), they sport in rivers (IV. 37, 3), let them go where there are swings (IV. 37, 4), *Apsarases* accompanied by dogs (XI. 11.15). The Mahabharata too (I. 65) speaks of them as daughters of Pradha from Kashyapa. They are divided into two groups, the worldly and the heavenly, the former comprising of 34 of them, while in the latter are mentioned 10 only. The most famous among them are Urvashi, Ghritachi, Rambha, Tilottama and Menaka. The famous Urvashi episode occurs in Rigveda (X. 95. 10-17). For other details see Mahabharata, Adiparva 93, 132 and 150 *Adhyayas.* The idea of these celestial nymphs is common to all languages, the Hauris of Muslims or the nymphs of the Greeks. Hessiod mentions more than 3000 as their number. In Marathi folksongs the word *Asara* is probably a derivation from this word. Sayana refers to this word in his Niruktabhashya (V. 13). **विभ्रमः** see M. The misplacing of ornaments in a flurry. It is simply a decoration for love-sport also. In case the earlier explanation is accepted the word *Mandana* would be a tautology. When the minerals reflected in clouds give the impression of an evening the Apsarases begin to wear ornaments etc. and get ready to meet their lovers, hence the possibility of the wrong placing of the ornaments. **वलाहकः** a cloud; see M. It is then a पृषोदरादि compound. **छेद...**छिन्नं द्रव्यं according to N. It is better to take it as खण्ड with M. The word according to M suggests the extreme heights of the mountain.

**वला...रागाम्** the redness is distributed among the several portions *(chheda)* of the clouds. **अकालसंध्याम्** This shows that a strange phenomenon of an evening appearing during daytime is meant. The clouds took on the colours of the

minerals as they got reflected in them. In the evening the sky becomes red, and also has other colours when the sun sets; especially so in the Himalaya regions. The poet therefore says that the clouds with these various reflected colours as it were brought on evenings at all hours. The *Apsarases* go as *Abhisarikas* to meet their lovers at tryst. So they put on their garments, ornaments etc. The मतुप् (मत् termination) in धातुमत्ता is in the sense of नित्यसंयोग cf. सि. कौ. भूमनिन्दाप्रशंसासु **नित्ययोगे**ऽतिशायिने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

5. Read आमेखलं संचरतां घनानां अधःसानुगतां छायां निषेव्य वृष्टिभिः उद्वेजिताः सिद्धाः यस्य आतपवन्ति शृङ्गाणि आश्रयन्ते.

**आमेखलं** upto the slopes or including the slopes: आङ् मर्यादाभिविध्योः ( अभिविधि being the limit *inceptive:* तेन विना मर्यादा तत्सहितोऽभिविधिः ) अधः ये सानवः (peaks, also table-lands) तान् गताम् छायाम्. **निषेव्य** having enjoyed. **सानुगताम्** is a *Dvitiya Tatpurusha* compound; see commentary. **वृष्टिभिः** by showers. **उद्वेजिताः** troubled, harassed, oppressed. **सिद्धाः** a class of semi-divine beings possessed of the eight *siddhis or miraculous powers* (see commentary which gives them). **आतपवन्ति** possessed of sunshine. The temination मतुप् ( =वत् ) is here in the sense of प्रशंसा: having pleasing, delightful sunshine. शृङ्गाणि peaks.

6. Read: यस्मिन् तुषारस्रुतिधौतरक्तं हतद्विपानां केसरिणां पदम् अदृष्ट्वा अपि नखरन्ध्रमुक्तैः मुक्ताफलैः किराताः ( केसरिणां ) मार्गं विन्दन्ति.

**किरातः** Name of a degraded mountain tribe who live by hunting, a mountaineer. किरं पर्यंतभूमिं अतति गच्छतीति किरातः. They seem to have been ( भेदाः किरातशबराः पुलिंदाः म्लेच्छजातयः ) *Mlechhas* according to *Amara.* They may have been Anaryas. It is said the present Tipperah District in East Bengal was the home of the Kiratas. The Brihatsamhita speaks of a Kirataraya and the Vishnupurana (VII. 30) describes them as residents of a country east of India. They are bracketted with the Jangalas in the Mahabharata. God Shankara had assumed the form of a Kirata while fighting with Arjuna. They are excellent archers. तुषारस्य (snow) स्रुतिभिः (melting) धौतं

(washed off) रक्तं (blood) यस्मिन्. **द्विपः** an Elephant. **केसरिन्** a lion (one who has the केसर or mane). नखरन्ध्रेभ्यः मुक्तैः dropped from the interistices between the nails of the paws of lions. मुक्तैः and मुक्ताफलैः provide a *Yamaka* which is defined as आवृत्तिं वर्णसंघातगोचरां यमकं विदुः--काव्यादर्श I. 61. **मुक्ताफलैः** by pearls. The commentary mentions the places where Muktas are found according to the conventions of Sanskrit poets. They are found in the best of Elephants, clouds, boars, conches, fish, serpents, shells and the Bamboo. Here the reference is to those found in elephants, which is a poetical conceit. The real pearl is a calcareous concretion of a peculiar lustre produced by certain molluscs. They are valued as objects of personal ornament.

The idea in the verse is that the trail of lions who have killed elephants is found not by the marks of blood, but by the pearls scattered from the temples of killed elephants. It also is meant to show the abundance of wealth of the Himalaya, where everything was in such great plenty.

7. Read: यत्र धातुरसेन न्यस्ताक्षराः कुञ्जरबिन्दुशोणाः भूर्जत्वचः विद्याधरसुन्दरीणां अनङ्गलेखक्रियया उपपयोगं व्रजन्ति.

**धातुरसः** mineral liquids like *Sindoor* and others. **न्यस्ताक्षराः** with letters inscribed on them. कुञ्जरस्य बिन्दवः ते इव शोणाः (or कुञ्जराः इव बिन्दुभिः शोणाः as does Mallinatha). red like spots on elephants. The Elephants at a particular age have red spots on their bodies ( काये वयोविशेषशोभिनः ). **भूर्जत्वचः** barks of Bhurja trees (Birch trees). **अनङ्गलेखक्रिया** the purpose of the love *(Ananga)* letters. This verse shows how the art of writing was prevalent in India. Buhler in his Indian Paleagraphy has raised objections regarding the date of the knowledge of writing and writing materials in India. It may be pointed out that a prakrit Dhammapada belonging to the 3rd or even 2nd Cent. B.C. was found in Khotan written in the Kharosthi characters. The Palm-leaf was another of the materials used for writing. In fact the words ग्रन्थ, सूत्र, स्कंध, खांड, शाखा, वल्ली, पर्ण or पत्र in literary parlance point out to the origin of writing materials. The word

लिख् (to scratch) is also significant. Kalidasa's न्यस्त can be read in this light. Dr. Luders has printed a portion of a drama belonging to the 2nd cent. A.D. (Cleaner's Sanskrit Texts, Part I). Even wood, and silk was used. The *Shilalekhas* and *Tamrapatas* also bear testimony to this. Subandhu in his *Vasavadatta* (Hall, p. 182) refers to the use of leather for writing. The interested may read भारतीय प्राचीन लिपिमाला by Ozha. It appears that the practice of writing love-letters is very old. In the *Vikramorvashiya,* Urvashi is shown writing her love-letter on *Bhurjapatra.* In the *Shakuntala* also our poet refers to the *Kamalapatra* as material for writing the love-letter.

8. Read: यः दरीमुखोत्थेन समीरणेन कीचकरन्ध्रभागान् पूरयन् उद्गास्यतां किन्नराणां तानप्रदायित्वं उपगन्तुं इच्छति इव. **कीचक** According to Mallinatha this is a special kind of bamboo from which flutes are manufactured. **समीरण**: wind. **उद्गास्यतां** Genetive plural of उद्गास्यत् participle of the second future of उत् + गा, about to sing loudly. Mallinatha says in the *Gandharva* scale (see com.). **किन्नराणाम** They are mythical beings with a human figure and head of a horse. कुत्सिताः नराः किंनराः According to Narayana they are both *Ashwamukha* and *Anashwamukha.* The *Ashwamukhas* are: मुखव्यतिरिक्तेषु गात्रेषु नराकृतयः while the *Anashwamukhas* are: मुखे नराकृतयः इतरत्र पश्वाकृतयः॥ **तानप्रदायित्वम्** responsibility of giving the tune. Tana is a particular note also denoted by the word 'Amsha', a protracted note, a keynote. The number of these Tanas is declared to be 49. The idea is that exactly as some one desirous of playing on a flute shows the different notes of a *raga* to the singer, so too Himalaya fills the bamboos (—flutes—) with wind from the mouths so as to help Kinnaras to sing. **उत्थ** Read the sutra quoted by M. It means that after a verb ending in आ with a preposition preceeding (here उत्+स्था, the affix क (=अ) is applicable. The previous आ is dropped according to आतो लोप इटि च (६।४।६४). Compare Raghu II. 12 or *Meghaduta* I. 60.

9. Read: यत्र कपोलकण्डूः विनेतुं करिभिः विघट्टितानां सरलद्रुमाणाम् स्रुतक्षीरतया प्रसूतः गन्धः सानूनि सुरभीकरोति.

कपोलकण्डूः... Itching of the cheek. This refers to Elephants in rut. It is observed by R. Lydekker in his "Great and Small Game of Indra and Tibet" that *Must* elephants are males in a condition of—probably sexual—excitement, when an abundant discharge of dark oily matter exudes from two pores in the forehead. The same authority also observes that Elephants are found along the foot of the Himalaya as far west as the valley of Dehra Dun, where winter temperature falls to a comparatively low point. The Asiatic variety never voluntarily exposes itself to the influence of the direct rays of the sun. Consequently during the hot season in upper India, and at all times except during the rains in the more southern districts elephants keep much to the denser parts of the forests. सरलद्रुमाणाम् pine trees. Devadaru and this tree appear to be the same (see M. on Raghu IV. 75-76.). M's observation about the Himalaya being a district when elephants abound is borne out by the modern authority quoted above.

सुरभीकरोति...... is a *chvi* form. The pine trees yield turpentine from deep notch cuts in the wood into which it runs and from which it is scooped as it accumulates. The pines in the Himalayas are found at a height of 7,000 to 12,000 ft. Their wood is highly resinous, durable and great quantities of a white clear turpentine exude from the branches when injured. This is *Pinus exceisa.*

10. Read: यत्र दरीगृहोत्सङ्गनिषक्तभासः ओषधयः वनितासखानां वनेचराण रजन्याम् अतैलपूराः सुरतप्रदीपाः भवन्ति.

दर्यः (caves) एव गृहाणि तेषां उत्सङ्गेषु (interior) निषक्ताः (poured or reflected) यासां ताः. The caves formed the houses. वनितासखा... is a तत्पुरुष compound as the rule राजाहः-सखिभ्यष्टच् is not available for a बहुव्रीहि. Therefore solve वनितानां सखायः वनितासखाः तेषाम् (Pan. V, 4. 91). See Narayana's comment in the Trivandrum edition. वनेचरः an Aluk compound. (See com.). अतैलपूराः which require no replenishment of oil. The Sanskrit poets often speak of such herbs. Cf. Raghu IV. 75 or Kirat V. 28. सुरतप्रदीपाः सुरतार्थं (for sexual enjoyment) प्रदीपाः lamps or सुरतकर्मणि प्रदीपाः as M. takes it.

11. Read: यत्र शिलीभूतहिमे मार्गे अङ्गुलिपार्ष्णिभागान् उद्वेजयति ( सति ) अपि दुर्वहश्रोणिपयोधरार्ता अश्वमुख्यः मंदा गतिं न भिन्दन्ति.

**शिलीभूत** rock-like, a *chvi* form. **अङ्गुलिपार्ष्णि** and **श्रोणिपयोधरं** are समाहारद्वंद्व compounds by द्वंद्वश्च प्राणितूर्यसेनाङ्गानाम् Pan. II. 4. 2. **पार्ष्णि** the heel. दुर्वहं श्रोणिपयोधरं तेन आर्ताः harassed by heavy hips and breasts. **अश्वमुख्यः**...... Females of Kinnaras. The cause of not going quickly even when they should have done so due to the biting cold of the snow, is obviously according to the poet the burden of the hips and breasts. This favourite idea is also found in Meghaduta 82 in श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्याम्.

12. Read: यः दिवा भीतं इव गुहासु लीनं अन्धकारं दिवाकरात् रक्षति; नूनम् उच्चैःशिरसां शरणं प्रपन्ने क्षुद्रे अपि सति इव ममत्वम्.

**दिवा** by day. **दिवाभीतम्** Owl also according to M who says उलूकमिवेति च ध्वनिः. **दिवाकरः** The sun. The प्रत्यय is ट as in the sutra quoted by M. Those who are great protect even the wicked, low or mean when they come for protection ( शरण ) Himalaya was great; the darkness was low enough; but even then Himalaya protected darkness which had concealed itself in its caves. The पञ्चमी in दिवाकरात् is according to the sutra "words denoting cause of fear take the ablative with verbs meaning "to fear" or "to save". " नारायण takes **मम** in ममत्व to be an अव्यय—ममेत्यस्मच्छब्दप्रतिरूपकमव्ययं, षष्ठ्यर्थे, तस्य भावः ममत्वम्. उच्चैः शिरः येषाम् ते. Lit. Those whose heads are high, i.e. high minded or magnanimous. **सति** goes with क्षुद्रे. The Kavyaprakash X which reads this word with शिरसाम् अतीव would construe अतीव with ममत्वम्. The Kavyaprakash illustrates with this the दोष—अनुचितार्थ, saying—Darkness being insentient there is no possibility of any fear from the sun in its case. How then there can be its protection by the mountain on that account? Some may explain away the anupapatti (absense of reasonable grounds or inapplicability of meaning) saying that this nature of the darkness arises out of mere imagination (utpreksha). But this attempt to explain away

the defect is useless according to मम्मटः अत्र अचेतनस्य तमसो दिवाकरात् त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

13. Read: इतस्ततः लाङ्गुलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरैः बालव्यजनैः चमर्यःयस्य गिरिराजशद्बम् अर्थयुक्तम् कुर्वन्ति.

**इतस्ततः...** here and there. The chowries were waved to and fro or here and there. The लांगूलs were the chowries. लाङ्गूलानां विक्षेपैः (waggings) विसर्पिण्यः (spreading) शोभाः (beauty.) येषाम् · (qualifies बालव्यजनैः ). **चन्द्रमरीचिगौरैः** as white as the rays(मरीचि)of the moon. **बालव्यजनैः** by means of chowries ( चामरैः ) chowrie is a sign of royalty. (Cf. अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे Raghu III. 16). This fly-whisk is formed from the tail of the yak ox, Bos (peophagus) grunniens who have a growth of shaggy hair on the flanks and underparts of the body and the well-known bushy tail. It is these half-breeds which are black and white while the pure-bred and the wild have a uniform black. **अर्थयुक्तं...** significant, full of meaning. **गिरिराजशब्दं...** the title = king of mountains. The idea is: Himalaya is a king of mountains. A king should posses the royal insignia, which is the chowrie. The chowrie is here provided by the wagging tails of the *Chamari* ox. Therefore they make his title full of meaning. Why चमर्यः Because the chowrie bearers were usually female.

14. Read: यत्र अंशुकाक्षेपविलज्जितानां किंपुरुषाङ्गनानां यदृच्छया दरीगृहद्वारि विलम्बिबिम्बाः जलदाः तिरस्कारिण्यः भवन्ति.

**अंशुकाक्षेपविलज्जितानाम्** who are bashful, who feel shame on account of the taking away of their anshuka. Anshuka is any garment; it means also a white garment (as in कल्पद्रुमकिसलयान्यंशुकानीव वातैः— Megh. 62 which may be silk or muslin). It is not very clear if silk was known at the time of Rigveda, but तार्प्य in the तै. सं. and later according to Goldstucker meant silk. Eggeling also accepts the meaning. This would show that silk was known in India, earlier than in China. **किंपुरुष**s are किंनरs, therefore किंपुरुषाङ्गनाs are kinnara ladies. दर्यः एव गृहाणि तेषां द्वारेषु विलम्बिनः बिम्बाः शरीराणि येषां ते.

**विम्ब**: body or form. **तिरस्करिणी** a curtain, a veil. In the विक्रमोर्वशीयम् (II and III) and in the शाकुंतल VI the science or art possessed by celestial beings of rendering themselves invisible by repeating some mantras is what is meant by this word. **जलदाः**... The clouds. They became the curtains for the kinnara ladies who were bashful when their garments were removed.

15. Read: भागीरथीनिर्झरशीकराणां वोढा मुहुः कंपितदेवदारुः भिन्नशिखंडिबर्हः यद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते.

**भागीरथी** ........ Ganges. It is the name of the त्रिपथगा in the mortal world whereas its name for the heavens is Mandakini and for the Patala it is Bhogavati. Cf. Ramayana, Balakanda, Cantos 38-44 for the story. Uttararamacharita I. 27 summarises the same: तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे कपिलमहसामर्षात्प्लुष्टान्पितुश्च पितामहान् । अगणिततनूतापं तप्त्वा तपांसि भगीरथो भगवति तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥ **मुहुः** again and again. Mallinatha also takes it to mean सद्यः, and quotes from Vaijayanti. It does not really matter whether it was सद्यः or पुनः पुनः as the turpentine is always associated with the Deodar or pine trees as remarked in our notes on I. 9 above. Arunagiri cites भित्वा सद्य किसलयपुटं देवदारुद्रमाणाम् from the मेघदूत in support of the meaning सद्यः. **यद्वायुः** wind or breeze from the Himalaya. **भिन्नशिखंडिबर्हः** भिन्नानि शिखण्डिनां बर्हाणि येन which dishevelled the plumes of the peacocks. It seems that the reference is more to the plumes of the peacocks themselves than those worn by kiratas in which case Bhinnashikhandibarhaih would be preferable; however it breaks the symmetry in the shloka. Some commentators including M take it to mean the feathers worn by the Kiratas. According to M they were worn by the Kiratas for quick speed. ( गतिलाघवार्थम् ) on their waists. In मालविकाग्निमित्र V. 10 आपार्ष्णिलंबिशिखिबर्हकलापधारि shows that a decoration was used. **अन्विष्टमृगैः**... who pursued the game, wild animals.

16. Read: सप्तर्षिहस्तावचितावशेषाणि यस्य अग्रसरोरुहाणि पद्मानि अधः परिवर्तमानः विवस्वान् ऊर्ध्वमुखैः मयूखैः प्रबोधयति.

Amara. **संभृतानलं** संभृतः सम्यक् रक्षितः अनलः अग्निर्यस्मिंस्तत्तथा, where fires were kept well-kindled and burning. The word नव is put in for वर्षादिभयनिवृत्त्यर्थम्. **तपोवनम्** the penance-grove. For a full description of such a hermitage, see the description of Jabali's ashrama in Bana's Kadambari: ' अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधम् etc.' Cf. a scene in canto XIII. **पावनम्** पावयतीति sanctifying. Cf. ' गावो विप्रस्तथाग्निश्च यस्मिन् देशे प्रतिष्ठिताः । तं देशं पावनं विद्यात् '. **तच्च** तत्र ( गौरीशिखरे ) A.

18. Read: यदा तावता पूर्वतपःसमाधिना काङ्क्षितं फलं लभ्यं न अमंस्त तदा स्वशरीरमार्दवम् अनपेक्ष्य सा महत् तपः चरितुं प्रचक्रमे.

**पूर्वतपःसमाधिना** See remark on verse 2 above. Tapas can accomplish anything difficult; but when she found that it was not possible to achieve her object etc. **तावता** that much; as much as she had so far performed. **फलम्** result. **काङ्क्षितम्** a v. l. is वाञ्छितम्. The propriety of the words: आनुषङ्गिकाणां प्रभावादीनां फलान्तराणां तावन्मात्रेणैव तपसा लभ्यत्वात्. It was possible that she might indeed get some fruit of her penance so far practised; but this अवान्तरफलप्राप्ति was not her objective. **अनपेक्ष्य** अविचार्य, अविगणय्य disregarding; not caring for. **स्वशरीरमार्दवं** as described in verses 11-13. शिरीषकुसुमाधिकं सौकुमार्यं. **महत्** great, rigid, rigorous, extreme. **प्रचक्रमे** began that time. In place of पूर्वतपः A, N read सर्वसमा which is explained as: सर्वत्र प्रियाप्रियेषु समा निर्विशेषचित्ता A, सर्वत्र शीतोष्णप्रियाप्रियादिषु द्वन्द्वेषु समा तुल्यबुद्धिः।

19. Read: कन्दुकलीलया अपि क्लमं या ययौ तया मुनीनां चरितं व्यगाह्यत, ध्रुवम् अस्याः ( पार्वत्याः ) वपुः काञ्चनपद्मनिर्मितम् प्रकृत्या मृदु च ससारम् एव च.

**क्लमम्** शरीरसादं, ग्लानिं, fatigue, exertion. The accusative is on account of the गत्यर्थक ययौ. **कन्दुकलीला** was a favourite sport of maidens. v. l. is कन्दुकसेवया. **अपि** shows that in spite of such great delicate form of her body she took to very rigorous penance. **मुनीनां चरितम्** for a complete description see Manu, ch. VI. The life of an ascetic. **व्यगाह्यत** shows how

deeply she took to it. She become completely engrossed in following that way of life certainly. 'ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्' Vishwa. **काञ्चनपद्मनिर्मितं** काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितं M, काञ्चनपद्मं तच्च स्वर्गापगादिसमुद्भवम् N. Her body was as it were constituted of golden lotuses; the golden lotus is very delicate and soft, but it can withstand a cruel weather. V. L. काञ्चनपद्मधर्मि is better as it directly expresses the meaning. What the Dharma of the golden lotus is, described below: मृदु...च. **ससारम्** कठिनम् शक्तिमदेव.

The verse is cited as an instance of Utpreksha in the अलङ्कारतिलक. A, N regard it as an instance of अर्थान्तरन्यासः अत्र काञ्चनपद्मधर्मित्वस्य हेतोः ससारत्वेन साध्येन व्याप्तिः प्रदर्शिता इति अर्थान्तरन्यास-प्रकारभेद एवायम् N. The word Dhruvam would decide that it is Utpreksha.

20. Read: शुचौ चतुर्णां ज्वलतां हविर्भुजां मध्यगता शुचिस्मिता सुमध्यमा नेत्रप्रतिघातिनीं प्रभां विजित्य अनन्यदृष्टिः सवितारमैक्षत.

**शुचौ** in summer. शुचिग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु ॥ Medini. **ज्वलतां हविर्भुजां** in the midst of burning fires. This is the पञ्चाग्निसाधन. Cf. Raghu. XIII. 41: हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः A says सवितात्र पञ्चमोऽग्निरिति पञ्चतपस्त्वमुक्तम्. **चतुर्णां** Cf. N: चतुर्णां पुरतः पृष्ठे पार्श्वयोश्च. The पञ्चतपस्त्व is: 'ग्रीष्मे पञ्चाग्निमध्यस्थः' N. माघः तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते । पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ II **शुचिस्मिता** is merely alliterative; of bright smile. मन्दस्मितं N. **मध्यगता** goes with हविर्भुजाम्. See रघु. quoted above. **सुमध्यमा** also alliterative. **विजित्य** overcoming. **नेत्रप्रतिघातिनीं** नेत्रे प्रतिहन्ति इति..... blinding or hurting the eyes. **प्रभाम्** the powerful light. शुचिमासे लब्धप्रतिष्ठस्य ग्रीष्मस्य तापाधिक्यप्रतीतिः N. **अनन्यदृष्टिः** fixing her gaze at the sun only निश्चलदृष्टिः A, N.

The student can see that Parvati was practising penance amidst four fires and had fixed her gaze at the sun only.

Though Parvati was so delicate, she succeeded in the Panchagnisadhana.

21. Read: सवितुः गभस्तिभिः तथा अतितप्तं तदीयं मुखं कमलश्रियं दधौ, अस्य दीर्घयोः अपाङ्गयोः केवलं श्यामिकया शनैः शनैः पदं कृतम्.

The effects of penance on her body are being described now. **तथातितप्तं** scorched to that extent. V.L. अभितप्तम्. **तथा** तेन निश्चलनिरीक्षणप्रकारेण A. **गभस्तिभिः** by the rays. **कमलश्रियं** the beauty of a lotus.' श्रीरिन्दिरायां शोभायाम् ' Ajaya. Cf. N. यथा कमलं सूर्यरश्मिसंयोगे नितरां शोभते तथास्या वदनमपीति भावः। न केवलं मनोहरत्वाद्वदनस्य कमलसाम्यम् अपि तु सूर्यरश्मिसंयोगे नितरामौज्ज्वल्याच्च इति अर्थः। Her face is likened to a lotus on account of the great beauty it came to bear by the पञ्चाग्निसाधन. **अपाङ्गयोः** at the corners. **दीर्घयोः** long corners of the eyes are a sign of beauty. **केवलं** The Shyamika was unable to spread or get access anywhere else, because the face was Sasara; so it attacked the extremely delicate parts of the eye. N. remarks: अपाङ्गयोर्मुखसम्बधित्ववचनेन यथा कश्चित् प्रबले निजशत्रौ अवकाशमलभमानस्तदीयं कञ्चन पीडयितुमारभते, तथा श्यामिकापि वदनेऽवकाशमलभमाना तदीयत्वादपाङ्गयोर्निजशक्तिं प्रकटयामास इति प्रत्यनीकालङ्कारो व्यज्यते। **शनैः शनैः** shows how slowly the Shyamika had to proceed. **श्यामिका** dark colour, swarthiness. Parvati was very stead-fast in her austerities; heated by the sun her face appeared the more charming for the trial; but the corners of the eyes suffered a little in the great struggle.

22. Read: तस्याः किल पारणाविधिः केवलम् अयाचितोपस्थितम् अम्बु रसात्मकस्य उडुपतेः च रश्मयः बभूव, वृक्षवृत्तिव्यतिरिक्तसाधनः न.

**अयाचितं** (unsolicited) च तद् **उपस्थितं च** come by itself. **अम्बु** n. water. **रसात्मकस्य** अमृतस्वरूपस्य, as good as nectar; nectar itself. The gods and the manes partake of this अमृत of the moon. **उडुपति** उडूनां नक्षत्राणां पतिः the moon, Lord of constellations. **रश्मयः** rays. **पारणाविधिः** the rite of breaking or concluding the fast. तेन च उपोषितभोजनं लक्ष्यते। घर्मकालपर्यन्तमु–

पोषिताया देव्यास्तदवसानसुलभानि मेघजलानि, दिवसावसानपर्यन्तमुपोषितायाश्च निशायां निशाकररश्मयः पारणाविधिर्बभूव । **वृक्ष...साधनः** वृक्षाणां वृत्तिर्जीविका ततो व्यतिरिक्तं यत्साधनम् N. She ate that—water and moonlight—which the trees themselves took for their livelihood. Whatever came unsolicited that only she accepted.

23. Read: द्विविधेन नभश्चरेण इन्धनसंभृतेन वह्निना च निकामतप्ता तपात्यये नवैः वारिभिः उक्षिता सा भुवा सह ऊर्ध्वगम् उष्माणम् अमुञ्चत् ।

**निकामतप्ता** extremely scorched. **विविधेन** better. **नभश्चरेण वह्निना** by the sun, traversing the sky. The sun is called Vahni, because he is included in he पंचाग्नयः. **इन्धनसम्भृतः** fed or kept by fire-wood. **तपात्यये** at the end of summer. 'ग्रीष्म ऊष्मकः । निदाघ ऊष्णोपगम ऊष्ण ऊष्मागमस्तपः' Amara. **उक्षिता** सिक्ता, wetted, moistened, sprinkled with. **नवैः** qualifies वारिभिः, the new rain water. The monsoon water. **भुवा सह** together with the earth. This gives the figure सहोक्ति. **ऊष्माणं** vapour, बाष्पम्. Cf. 'ग्रीष्मोष्मबाष्पमूष्माणम्' Yadava.

The idea of the verse is that Parvati's body together with the earth gave out vapour when sprinkled by rain. That the earth gives out vapour when there is a first shower is a fact well-known to any intelligent man.

24. Read: प्रथमोदबिन्दवः पक्ष्मसु क्षणं स्थिताः, ताडिताधराः, पयोधरोत्सेध-निपातचूर्णिताः वलीषु स्खलिताः चिरेण तस्याः नाभिं प्रपेदिरे.

**पक्ष्मसु** on the eye-lashes. अक्षिरोमसु N. Cf. पक्ष्माक्षिलोम्नि किंजल्के तंत्वाद्यंशेऽप्यणीयसि' Amara. अनेन पक्ष्मणां निबिडत्वमुक्तम् । तच्च सौष्ठवद्योतकम् N. **पयोधरो...चूर्णिताः** पयोधरयोः उत्सेध उपरिभागे यो निपातः तेन चूर्णिताः shattered or broken into pieces, or still smaller drops by beating against the elevated breasts. कुचकाठिन्यादिति भावः M. **वलीषु** on the (three) folds. **स्खलिताः** tumbled. अनेन वलीनां सोपानवद् विषमत्वं उक्तम् । **प्रपेदिरे** See ingenious M: प्रविष्टा न तु निर्जग्मुः showing that she had a deep navel. **प्रथमोदबिन्दवः** because it was the *first* shower. **उद** 'मन्थौदन–' इत्यादिनोदकशब्दस्य उदादेशः । Cf. M· प्रथमविशेषणाद्बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वं च गम्यते.

The drops of the first shower fell on the eyelashes, then on the lips, thence on the breasts, from there on to the three folds and lastly they came to the navel. By a suggestion the poet wants us to infer that she was engaged in prayers and did not wipe off the drops by her hands. Cf. N. अनेन क्रमप्राप्तिवर्णनेन अक्ष्यादितत्तदवयवस्थितानां जलबिन्दूनां क्लेशकरत्वाद् अवश्यंभाविनः करपरिमार्जनस्याभावो द्योत्यते तेन तु चित्तैकाग्र्यम्.

There is परिकर अलंकार. [ पर्याय acc. to साहित्यदर्पण and अलंकारसर्वस्व, माधुर्य and वर्णमसृणत्व acc. to सरस्वतीकण्ठाभरण and श्लिष्टत्व (not wordy श्लेष ) acc. to अलंकारचूडामणि ].

25. Read: निरन्तरासु अन्तरवातवृष्टिषु अनिकेतवासिनीं शिलाशयां तां महातपःसाक्ष्ये स्थिताः क्षपाः तडिन्मयैः उन्मिषितैः व्यलोकयन् इव.

**शिलाशयां** शिलायां शेते sleeping on rock or stone. **अनिकेतवासिनीम्** not residing in a house. Cf. मनुः—अनग्निरनिकेतः स्यात्पुष्पमूलफलाशनः VI. 25, and अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ VI. 26. **निरन्तरासु** अन्तररहितासु without a gap or stop; unceasing. **अन्तरवातवृष्टिषु** अन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयः unabated showers with intervening storms. Cf. मनुः ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः VI. 23. **उन्मिषितैः** flashes; winking. **तडिन्मयैः** the winking was in the form of lightning. 'तडित्सौदामनी विद्युत्' Amara. **महातपःसाक्ष्यः** साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि संज्ञायाम्' इति इनि प्रत्ययः । तस्य कर्म साक्ष्यं act of witnessing. The witnesses are: आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ **क्षपाः** nights.

26. Read: उदवासतत्परा परस्पराक्रन्दिनि पुरः वियुक्ते चक्रवाकयोः मिथुने कृपावती सा अत्यन्तहिमोत्किरानिलाः सहस्यरात्रीः निनाय.

**हिमोत्किरानिलाः** हिमं उत्किरंति विक्षिपन्ति N. That scattered snow. Mallinatha explains उत्किरा अनिलाः Cf. 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' Amara. Or उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ Amara. The word may be उत्कर also. **सहस्यरात्रीः** the nights of सहस्य, the पौष month. सहस्यो हेमन्तान्त्यमासः N. Cf. 'पौषे तैषसहस्यौ द्वौ'

Amara. **उद्वास** उदकस्य उदादेशः । residence in water. See Manu quoted above (verse 25). **पुरो** अग्रतः in front. Parvati passed the nights in water in winter (पौष is the coldest month) as she practised Panchagnitapa in summer. The poet has described three seasons ( ग्रीष्म, वर्षा and शिशिर ) only in accordance with मनु's description.

27. Read: निशि पद्मसुगन्धिना प्रवेपमानाधरपत्रशोभिना मुखेन सा तुषारवृष्टिक्षतपद्मसंपदाम् अपाम् सरोजसंधानम् अकरोत् इव.

**पद्मसुगन्धिना** पद्मवत् सुगन्धिना, fragrant, or sweet-smelling like a lotus. सुगन्धि the word Gandha becomes Gandhi according to 'गन्धस्य इत्–'. This adjective would show that she belonged to the Padmini type of ladies—which is thus described: भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरलचकुयुग्मा चारुकेशी कृशांगी । मृदुवचनसुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगंधा Ratimanjari. **अधरपत्र** अधरं एव पत्रं the leaf in the form of the lip. **तुषार** snow; frost. **क्षत** destroyed, hurt. **सरोजं** a lotus. **संधानम्** replacing. V.L. संतान is not preferable. **इव** shows the Utpreksha. The idea in the verse is: Frost had destroyed the lotuses in the water. Parvati's mouth had the fragrance of a lotus and her lips throbbed at night owing to the intense cold like a lotus-leaf. So with all this lotus-like equipment Parvati as it were gave back to the waters their former beauty, brought to them by the existence of the lotuses. There is a Sankara of Vyatireka and Utpreksha. Narayana regards it as an 'एकदेशविवर्तिरूपक अधरस्य पत्ररूपणान्मुखस्य पद्मरूपणमर्थादायातमिति'.

28. Read: स्वयंविशीर्णद्रुमपर्णवृत्तिता हि तपसः परा काष्ठा; तया पुनः तत् अपि अपाकीर्णम्, अतः प्रियंवदाः पुराविदः ताम् अपर्णा इति च वदन्ति.

**स्वयं** may be taken as one word with विशीर्ण Cf. पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा । कालपक्वैः स्वयंशीर्णैः वैखानसमते स्थितः ॥ VI. 21. **वृत्तिता** subsistence. **परा काष्ठा** the furthest limit. Cf. 'काष्ठोत्कर्षे स्थितौ दिशि' Amara. **अपाकीर्णम्** repudiated; given up. **तदपि** is explained by the first half of the verse. **प्रियंवदां** 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । **वदन्त्यपर्णा**

अपर्णाम् would be a wrong, ungrammatical reading as the इति does not require the द्वितीया. **पुराविदः** Those who know the पुराणs, पुराणज्ञाः.

The verse gives a fanciful derivation of the word Aparna. The Kumarasambhava gives the name as that of Uma; but the Matsyapurana says that Aparna was a sister of Uma. Cf. Matsya III. 8: मेना च सुषुवे तिस्रः कन्याः योगवतीस्ततः । उमैकपर्णाऽपर्णा च तीव्रव्रतपरायणाः ॥ The verse describes the limit of austerities practised by her.

29. Read: एवमादिभिः व्रतैः मृणालिकापेलवं स्वम् अङ्गम् अहर्निशं ग्लपयन्ती सा, तपस्विनां कठिनैः शरीरैः उपार्जितं तपः दूरम् अधश्चकार.

**मृणालिका** मृणाली एव मृणालिका, अल्पार्थे कः । a lotus-stalk. **एवमादिभिः** by such and others. **व्रतम्** a vow. Several Vratas are enjoined in the different Puranas; there is no fixed number of these. **ग्लपयन्ती** शोषयन्ती or कर्षयन्ती. Causing to wither or waste. **अहर्निशम्** द्वन्द्व compound. समित्कुशमितिवदेकवद्भावो नपुंसकत्वं च. **कठिनैः** to practise severe penance, it is necessary to have a very sound body. Cf. ' नायमात्मा **बलहीनेन** लभ्यः '. **अधश्चकार** laid low; surpassed. ' तपस्विभिरप्येवं तपः कर्तुं न शक्यते इति तात्पर्यार्थः ' M. The verse shows how determined Parvati was. She had a very delicate body and yet she surpassed the penance practised by male ascetics with hardened bodies. It is the highest limit as it were. ' अनेन तपस्सिद्धिकथनेन तपोवर्णनमुपसंहृतमित्यवसेयम् ' N.

30. Read अथ अजिनाषाढधरः प्रगल्भवाक् ब्रह्ममयेन तेजसा ज्वलन् इव कश्चित् जटिलः शरीरबद्धः प्रथमाश्रमः यथा तपोवनं विवेश.

**अजिनाषाढधरः** अजिनं कृष्णमृगत्वक् । आषाढः पालशदण्डः । तयोः धरः । धरतीति धरः । पचाद्यच् । अजिन the skin of the black antelope. आषाढ the staff of Palasha. ' पालाशो दण्ड आषाढः ' Amara. आषाढः प्रयोजनमस्य इत्यण् । ' विशाखाषाढीदण्डसन्ढदण्डयोः ' इत्यण् । A Brahmin is to have a staff of Palasha or Bilva tree. Cf. मनुः—ब्राह्मणो वैल्वपालाशौ क्षत्रियो वटखादिरौ । पैलवौदुम्बरौ वैश्यो दण्डानर्हति धर्मतः II. 45.

The staff of a Brahmin should be up to the hair. केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः II. 45. **प्रगल्भवाक्** with a bold speech. प्रौढ-वचनः M. **ब्रह्ममय** consisting of the Vedas. Brahman n. is Veda, ब्रह्मतत्त्वतपो वेदे न द्वयोः पुंसि वेधसि। Medini. He had Studied the Vedas and therefore appeared as if burning with that Brahmic lustre. **कश्चित्** Cf. N. कदाचिदप्यदृष्टचरत्वात्प्रत्यभिज्ञागन्धेनापि रहितः इत्यर्थः। **जटिलः** जटावान्, ब्रह्मचारी इति शेषः। पिच्छादित्वादिलच्. Manu prescribes the wearing of जटा s मुण्डो वा स्यादथवा स्याच्छिखाधरः। **प्रथमाश्रमः** The first stage of life. The Brahmacharyashrama. A detailed description will be found in the Manusmriti or गौतमधर्मसूत्रः Cf. मनु 87: ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। where Brahmacharya is mentioned first. **शरीरबद्धः** in a body, corporeal form. **यथा** shows the Utprekasha. It is used in the sense of इव.

The verse is quoted in चित्रमीमांसा as an instance of नर्मगर्भ —in which the figure ends in उत्प्रेक्षा where we should find an उपमा.

Some read one more verse between the 29th and 30th verse.

Translate: 'Seeing that the daughter of the lord of mountains had practised penance sufficient to influence Shambhu (god Shiva), the afflicted gods, after prostrating before him (Shiva) requested him for a son, (to be) the commander of the forces, for purposes of the fight (with demons)'. The verse would be unpoetic here and would lose all the suggestion and consequent fun. It deserves to be rejected.

31. Read: आतिथेयी पार्वती बहुमानपूर्वया सपर्यया तं प्रत्युदियाय; साम्ये निविष्टचेतसाम् अपि वपुर्विशेषेषु अतिगौरवाः क्रियाः भवन्ति.

**आतिथेयी** अतिथिषु साध्वी। 'पथ्यतिथिवसतिस्वपेतः'—इत्यादिना ढञ्। 'टिड्ढाणञ्' इति ङीप् good to the guests; hospitable. **बहुमानपूर्वया** attended with great respect. .. ....**सपर्यया**..... with materials of worship; 'सपर्यार्चार्हणाः समाः' Amara. **प्रत्युदियाय** प्रत्युज्जगाम went forth to receive him, or welcome him. **साम्ये** in equality.

**निविष्टचेतसां** having a firm mind. **वपुर्विशेषेषु** towards excellent forms or men. **अतिगौरवाः** अतिगौरवसहिताः । 'स्वति पूजायाम्' इति समासः । The idea seems to be that Parvati welcomed the Brahmacharin with great respect. Even though both of them were equal in status, yet very respectful actions come off of themselves in the case of distinguished persons. According to N all distinguished persons share divine nature in conformity with a declaration of the Bhagavadgita: यद्यद् विभूतिसत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ In fact all अतिथिs should be welcomed, but here the बहुमानसपर्या is on account of the वपुर्विशेषत्व.

32. Read: विधिप्रयुक्तां सत्क्रियां परिगृह्य, क्षणं च परिश्रमं नाम विनीय, उमाम् ऋजुना एव चक्षुषा पश्यन्, अनुज्झितक्रमः सः वक्तुं प्रचक्रमे.

**विधिप्रयुक्तां** done in accordance with prescribed rites. **प्रतिगृह्य** accepting. V.L. परिगृह्य. **सत्क्रियां** welcome. **नाम** अपरमार्थे, A अविद्यमानाध्वपरिश्रमापनयं कञ्चित्कालमभिनीय. Shiva was not really tired; but he must *show* that he was fatigued. A remarks अनेन सर्वस्यैव वर्णिवृत्तान्तस्य व्याजोपगूहितत्वं सूचितम् । **ऋजुना** विलासरहितेन, with propriety, absence of amorous gestures. **अनुज्झितक्रमः** without giving up decorum. Shiva would have very much liked to act the lover towards Parvati and cajole her; but his disguise of a Brahmacharin set on him a certain discipline and he had to undergo all formalities properly. He would have liked to look at her with an amorous eye; but his disguise demanded that he must look straight.

33. Read: अपि क्रियार्थं समित्कुशं सुलभम्, अपि जलानि ते स्नानविधिक्षमाणि, अपि स्वशक्त्या तपसि प्रवर्तसे, शरीरं खलु आद्यं धर्मसाधनम्.

**अपि** here used to introduce a question. 'अपिः समुच्चये प्रश्ने' —Bhoja. **क्रिया** sacrificial rites. होमादिक्रिया एव अर्थः. **समित्कुशम्** समिधः कुशाश्च । 'सर्वो द्वन्द्वो विभाषैकवद्भवती' त्येकवद्भावः । 'स नपुंसकम्' (२-४-१७) इति नपुंसकम्. The sacrificial faggots and *darbha* grass. **स्नानविधिक्षमाणि** स्नानविधौ क्षमाणि fit for bath. 'शक्ते योग्येऽपि च क्षमः' Vararuchi. **खलु** प्रसिद्धौ, It is wellknown.

Shiva is asking the questions fit for a Brahmachain. What else except 'Samit-kusha' would he inquire of? He wants to know if the water she gets, is pure for her baths. He asks if she is practising penance in proportion to her capacity, meaning thereby that she should not over-exert herself. Sound body is the first means of acquiring merit.

34. Read: अपि त्वदावर्जितवारिसंभृतं आसाम् वीरुधां प्रवालम् अनुबन्धि, यत् चिरोज्झितालक्तकपाटलेन ते दन्तवाससा तुलाम् आरोहति.

**आवर्जित**...... sprinkled over by or brought by. **प्रवालम्** sprouts. **अनुबन्धि** अविच्छिन्नं uninterrupted, continuous 'सम्बन्धे सन्ततासक्तावनुबन्धः प्रकीर्तितः' Bhoja. **वीरुधाम्** of the creepers. 'लता प्रतानिनी वीरुध्' Amara. **चिरो...पाटलन** qualifies दन्तवाससा चिराय उज्झितं ( तपःप्रारम्भसमये परित्यक्तं ) अलक्तकं [ लाक्षारसो ] येन तथाभूतेन पाटलेन which was reddish though it no more had the lac dye. **तुलां आरोहति** rises to comparison. The word तुला is used here with the instrumental, which is not permitted. But here we have to take the word as सादृश्यपदार्थवाची and then the difficulty does not arise. Another word तुला is then understood to be सदृशपदार्थवाची and the प्रतिषेध refers to that word only. Read N: ननु 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' [ २. ३. ७२ ] इति सूत्रेण तुलाशब्दप्रयोगे तृतीयाप्रतिषेधात् कथं दन्तवाससा तुलामित्युच्यते। अत्र भोजः—सदृशपदार्थवाची सादृश्यमात्रवाची चेति द्वौ तुलाशब्दौ। तयोः सदृशपदार्थवाचकतुलाशब्दयोगे एव तृतीयाप्रतिषेधः। अत एव कृष्णस्य तुला नास्तीत्युदाहृतम्। कृष्णेन सदृशः कोऽपि नास्तीत्यर्थः। सादृश्यमात्रवाचकतुलाशब्दयोगे तु तृतीयापीष्यत एव। अतोऽत्रत्यस्य तुलाशब्दस्य सादृश्यमात्रवाचकत्वात् नोक्तदोषानुषङ्गः। **दन्तवाससा** ओष्ठेन with the lip. 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' Amara.

35. Read: अपि करस्थदर्भप्रणयापहारिषु हरिणेषु ते मनः प्रसन्नम्, ये [हरिणाः] उत्पलाक्षि प्रचलैः विलोचनैः तव अक्षिसादृश्यं प्रयुञ्जते इव.

**प्रसन्नं**... pleased; well-disposed; kindly **करस्थ...हारिषु** करस्थानां दर्भाणां प्रणयात् अपहारिषु who take away or carry away through their desire etc. प्रणयापराधिषु who had offended her through their desire for the Darbha grass in her hands. **उत्पलाक्षि** कमलाक्षि. **ये** which deer. Another reading is उत्पलाक्षेप-

चलैः। N explains: आक्षेपशब्दः अत्र द्रव्यपरः। आक्षिप्यमाणमुत्पलम् उत्पलाक्षेपः, तद्वच्चलैः। **अक्षिसादृश्यम्** similarity or resemblance to your eyes.

It will be marked that slowly and slowly Shiva is flattering Parvati. In the last verse he complimented her on the reddish colour of her lips, which retained the colour long after the lac dye was given up. In this verse he praises her eyes which are being rivalled, but poorly, by the deer.

36. Read: (हे) पार्वति, पापवृत्तये रूपं न इति यत् उच्यते (तत्) अव्याभिचारि वचः, तथा हि, (हे) उदारदर्शने ते शीलं तपस्विनाम् अपि उपदेशतां गतम्.

पापवृत्तये रूपं न इति यदुच्यते तद् वचः अव्यभिचारि. **यदुच्यते** सामुद्रिकसारदर्शिभिः। **पापवृत्तये** for evil conduct; sinful behaviour. **पापा**चरणाय M. **अव्यभिचारि** व्यभिचारः अन्यथाभावः (disagreement, exception to a rule) व्यभिचरितुं शीलं अस्य इति व्यभिचारी, ततः अन्यत् अव्यभिचारी। तच्च नपुंसकम् अव्यभिचारि। Which is true in all cases, which is without exception. **शीलम्** character, chastity. 'शीलं स्वभावे सद्वृत्ते.' **उदारदर्शने** this phrase can have three meanings: (1) possessing wide eyes, or (2) having a beautiful form, or (3) possessing great knowledge. उदारम् उत्कृष्टं दर्शनं यस्याः सा। हे रूपवतीत्यर्थः N. **उपदेशतां गतं** उपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं। which would be a point of advice to the ascetics. N. quotes मनुः 'देवा धर्ममूलं तद्विदां च स्मृतिशीले' (वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्) इत्या आदिषु स्मृतिषु सदाचारस्यापि प्रामाण्यस्य प्रतिपादितत्वादिति भावः। शील of the good is a norm of conduct even according to the स्मृति. Therefore your behaviour will inspire the sages to act properly.

This verse is quoted as an example of अर्थान्तरन्यास in the काव्यानुशासन.

37. Read: एष महीधरः सान्वयः विकिर्णसप्तर्षिबलिप्रहासिभिः दिवः च्युतैः गाङ्गैः सलिलैः तथा न पावितः, यथा त्वदीयैः अनाविलैः चरितैः (पावितः).

**सप्तर्षि** The seven sages are: कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः। विश्वामित्रो जमदग्निः etc. or they are enumerated also as:

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः ते हि चित्रशिखण्डिनः ॥ They take a bath in Mandakini. Cf. VI. 5. आप्लुतास्तीरमन्दार-कुसुमोत्कीरवीचिषु । व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ **बलिः** an offering. बलिशब्देनात्र तदुपयुक्तानि कुसुमादीनि लक्ष्यन्ते N. **प्रहासिभिः** brilliant with. V.L. is प्रभासिभिः the same meaning. Solve the compound as सप्त च ते ऋषयश्च । विकीर्णैः पर्यस्तैः सप्तर्षीणां बलिभिः प्रहसन्ति ये. **गाङ्गैः** Because the Ganges is said to purify गङ्गा गङ्गेति यन्नाम योजनानां शतेष्वपि । कीर्तितं हन्ति पापानि... । **दिवश्च्युतैः** fallen from heaven. दिव्यैः इत्यर्थः । अनेन पावनत्वापादनसामर्थ्यातिशय उक्तः N. **अनाविलैः** अकलुषैः M. असङ्कीर्णैः । दुराचारलेशेनापि रहितैः । गङ्गाजलानां तु कदाचिदाविलत्वमपि संभाव्यत इति व्यतिरेकध्वनिः N. **सान्वयः** with his whole family. The idea is that this mountain, Himalaya, together with his relations ( पितृपितामहमातामहादिवंशपरम्परासहितः N) is sanctified by your blameless conduct. He would not have been rendered as much holy by waters of the Ganges which fall from heaven, that sared region, and in which the great seven sages have made their offerings and sanctified the waters of the river.

38. Read: ( हे ) भाविनि, यत् मनोनिर्विषयार्थकामया त्वया एकः एव प्रतिगृह्य सेव्यते, अनेन धर्मः सविशेषम् त्रिवर्गसारः अद्य मे प्रतिभाति. ।

**धर्मः** One of the त्रिवर्ग. **सविशेषं** because Parvati had taken to it. सातिशयम्. **त्रिवर्गसारः** 'त्रिवर्गो धर्मकामार्थैः' The three objects of human existence. The best among three. **भाविनी** (V.L. भामिनी ). प्रशस्ताभिप्राये M. One of good intentions. **भामिनी** 'भाम दैवानुकूल्यं च सौभाग्यं चापि कथ्यते' Puranakavi. **मनो......कामया** मनसः निर्विषयौ अविषयौ अर्थकामौ यस्याः सा who has no room for अर्थ and काम in her mind. She thinks of धर्म alone, being सारज्ञ. Cf. N. यस्मात्त्वया यौवनोचितान् कामान् पितृगृहगतानि अतिसुलभानि धनानि अपि अनादृत्य धर्म एव साभिप्रायं सेव्यते, तस्माद् धर्मार्थकामानां मध्ये धर्मस्यैव प्राधान्यमिति सम्प्रति मे निश्चयो जात इति भावः । The idea is that धर्म definitely seems to be the essence of the त्रिवर्ग as

Parvati even practises it, having given up अर्थ and काम. धर्म was the preeminent of the three; but it is specially confirmed today by Parvati's behaviour.

39. Read: आत्मना प्रयुक्तसत्कारविशेषं मां परं संप्रतिपत्तुं न अर्हसिः यतः, ( हे ) संनतगात्रि, मनीषिभिः सतां संगतं साप्तपदीनम् उच्यते.

**प्रयुक्त......शेषं** qualifies मां; who am given a special reception. **संप्रतिपत्तुम्** to understand. A, N read सा प्रतिपत्तुम् which is not good. न संप्रतिपत्तुम् to disregard. **सन्नतगात्रि** सन्नताङ्गि M. संनतं सुंदरं गात्रं यस्याः। 'नतं चारु सन्नतम्' भोजः। Lady with beautiful or stooping limbs. **संगतं** friendship. सख्यम् M. परस्परसङ्गमनम् N. भावे निष्ठा. The P. P. P. is used in the sense of an abstract noun **साप्तपदीनम्** सप्तभिः पदैः आपद्यते or सप्तपदोच्चारणजन्यम् Brought about by seven peaces or steps, or words. The सप्तपदी rite in marriage is wellknown where the pairs, after going seven paces, are supposed to form an intimate union. प्राहुः साप्तपदीं मैत्रीं जना शास्त्रविचक्षणाः or सतां सप्तपदा मैत्री सत्सतां त्रिपदा स्मृता Avachuri quoted by Mr. Deshpande. 'साप्तपदीनं सख्यं' इति निपातनात्साधुत्वम्.

40. Read: ( हे ) तपोधने, अतः अत्र बहुक्षमां भवतीं द्विजातिभावात् उपपन्नचापलः अयं जनः किंचित् प्रष्टुमनाः, रहस्यं न चेत् प्रतिवक्तुम् अर्हसिः.

**अतः** for the reason given above. **बहुक्षमाम्** बह्वी क्षमा यस्याः very forgiving. **द्विजातिभावात्** ब्राह्मणत्वात्. On account of my being a Brahmin. **उपपन्नचापलः** उपपन्नं युक्तं चापलं चपलकर्म, or सुलभधाष्टर्यः in whose case suddenness is allowed, or who is naturally forward. **अयं जनः** I, this person. **प्रष्टुमनाः** प्रष्टुं (to inquire) मनः यस्य सः who has a mind to inquire. ( 'तुं काममनसोरपि' इति मकारलोपः ). **न चेद्रहस्यम्** Cf. N. नन्वतिप्ररूढेऽपि सख्ये रहस्यप्रकाशनं बहुदोषावहं, 'मन्त्रं सुरक्षितमपि छिन्द्यादाप्तपरम्परा' इति न्यायात्।

The idea of the verse is that Parvati is very forgiving and hence the Brahmacharin can make himself bold enough to ask her about something. If it be not a secret her permission is courteously sought for the enquiry.

41. Read: प्रथमस्य वेधसः कुले प्रसूतिः, वपुः त्रिलोकसौंदर्यम् इव उदितम् ऐश्वर्यसुखम् अमृग्यं अतः परं किं तपःफलं स्यात् वद.

**कुले** in an exalted family. **प्रथमस्य वेधसः** of the first creator, हिरण्यगर्भ,' यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः ' Brahmapurana. **वेधस्** Brahman मरीच्यादीनां सर्गशेषविधायित्वान्न प्राथम्यमिति भावः N. **उदितम्** एकत्र समाहितं brought together. A, N read आर्जितम् एकत्र सञ्चितमिव. **अमृग्यम्**...... that need not be sought for. **तपःफलं वद**......may mean what further fruit of austerities can be secured? You already have an exalted birth, an uncommon beautiful exterior and unthinkable wealth. What more than this can be the fruit of austerities? **किम्** क्षेपे. अस्य तपसः फलभूतमन्यत् किमपि न मे विचारमार्गमारोहति, अस्ति चेद् वद इत्यर्थः N.

42. Read: दुःसहात् अनिष्टात् अपि मनस्विनीनाम् ईदृशी प्रतिपत्तिः भवति नाम; ( हे ) कृशोदरि तत् ( अनिष्टं ) च विचारमार्गप्रहितेन चेतसा त्वयि न दृश्यते. ।

People begin to practise austerities for some reason; but in the case of Parvati no such cause is discernible. **अनिष्टम्** भर्त्रादिकृतम् A, M. This meaning is unacceptable as Shiva knew that Gauri was unmarried. It can however be defended by supposing that the Brahmacharin is asking it deliberately to keep up the disguise. The words in 45 below cannot be anticipated here ( अथोपयंतारमलं समाधिना ). अप्रियात्, अनभिभवनीयेन केनचित् कृतान् N. **नाम** possibly. **मनस्विनी** a spirited lady. धीरस्त्री M, स्थिरचित्ता N. **ईदृशी** त्वयि इदानीं दृश्यमानप्रकारा N. **प्रतिपत्तिः** disposition of the mind 'प्रतिपत्तिस्तु गौरवे प्राप्तौ प्रवृत्तौ प्रागल्भ्ये ' इति केशवः । **प्रहित** P. P. P. of प्रधा. **कृशोदरि** a V.L. तलोदरि A. Thin-bellied. A thin belly is a sign of beauty. The poet says that it is possible that penance may be resorted to for avenging a wrong done by an undesirable person; but that does not appear to be the case. He is unable to find out the reason of her penance though his mind is searching along the way of deliberation.

43. Read: इयम् आकृतिः अलभ्याशोकाभिभवा, (हे) सुभ्रु पितुः गृहे विमानना कुतः, पराभिमर्शः तव न अस्ति, पन्नगरत्नसूचये कः करं प्रसारयेत्.

**अलभ्य......भवा** where the insult due to grief or sorrow is impossible. **आकृतिः** your beautiful form itself suggests that there is no possibility of any insult due to your grief. The idea of a beautiful form not being subject to misery is very common. See विक्रमोर्वशीय IV:—तादृशा आकृतिविशेषाः चिरं दुःखभागिनः न भवन्ति । Cf. N. नहि सामुद्रिकोक्तसकललक्षणपरिपूर्णे जनेऽनिष्टप्राप्तिः संभाव्यते । **विमानना** insult. **पराभिमर्शो** बलात्कारेण स्पर्शः, परधर्षणं. Assault by another, molestation. **पितुर्गृहे** It is well-known:—पिता रक्षति कौमारे. Himavat is such a mighty father that it is unthinkable that anybody can molest Parvati at his house. **पन्नगः** a serpent. **सूचिः** the tip; another reading is सूति. **सुभ्रूः** The reading in the text is सुभ्रु as the vocative singular which would be grammatically inaccurate, unless the word is treated like अलाबू or कर्कन्धू.

An emendation: सुभ्रू कुतस्तातगृहेऽवमाननम् also does not improve matters. According to भाष्यकार rare cases in दीर्घ ऊ may be allowed to have their vocative in short उ being treated like words in the नदी class which shorten their vowel in the सम्बुद्धि.

44. Read: यौवने आभरणानि अपास्य त्वया वार्धकशोभि वल्कलं किम् इति धृतम्, वद यदि प्रदोषे स्फुटचन्द्रतारका विभावरी अरुणाय कल्पते.

**किमिति** Why? **यौवने** अस्य वयसः न उचितं वल्कलधारणमिति भावः N. It is the time when all pleasures should be enjoyed. **वार्धकशोभि** वृद्धस्य भावः वार्धकम् । मनोज्ञादित्वात् वुञ् प्रत्ययः. 'वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः । तत्र शोभत इति M. Befitting old age. N. remarks: एवमनुचितपरिग्रहः किमर्थं त्वया कृतः इति प्रश्नस्य न एवं त्वया कर्तव्यमिति इति एव अर्थः । **प्रदोषे** at the beginning of night or at dusk 'प्रदोषो रजनीमुखम्' Amara **स्फुटचन्द्रतारका......**when the moon and all constellations (and stars) are visible.

अत्र आभरणप्रतिवस्तुतया तारकाणां निर्देशः N. **विभावरी** night. Cf. 'विभावरी निशारात्र्योः कुट्टन्यां चक्रयोषिति । विवादे वस्त्रकुब्ज्यां च.' विभाति नक्षत्रादिभिः क्वनिप् ( ३।२।७४ )। 'वनो र च' ( ४।१।७ ) इति ङीब्रौ । **अरुणाय** for dawn. The चतुर्थी is क्रियार्थे. **कल्पते** deserves. See M.

This Verse is quoted as an instance of परिवृत्ति in the अलङ्कारसर्वस्व.

45. Read: यदि दिवं प्रार्थयसे श्रमः वृथा, तव पितुः प्रदेशाः देवभूमयः, अथ उपयन्तारम् ( प्रार्थयसे ) समाधिना अलम् ; रत्नं न अन्विष्यति तत् हि मृग्यते.

**दिवम्** heaven. **प्रार्थयसे** request, wish, seek; long for. **श्रमः** penance 'श्रमु तपसि खेदे च' इति धातोर्भावे घञ् । मान्तत्वात् वृद्ध्यभावः । 'अभ्यासे शस्त्रविद्यादौ वेदे तपसि च श्रमः' इति भोजः N. **देवभूमयः** Divine regions; celestial lands स्वर्गाः N. The region of your father is स्वर्ग itself. You should not long for स्वर्ग. अथ introduces a question. **उपयन्तारम्** husband. Cf. विवाहोपयमौ समौ. वरं M, N. **समाधि** yogic practices. **अन्विष्यति** ( रत्नं कर्तृ ) It is not the jewel that goes out in search of a befitting recepient; it is the recepient who seeks for it. यथा सर्वप्रार्थनीयं रत्नमात्मधारणयोग्यपुरुषमन्विष्य पर्यटति इति असम्भाव्यं, तथा कान्तप्रार्थनया तव इदं तपश्चरणम् इति भाव; N. The figure of speech would be अप्रस्तुतप्रशंसा if the word रत्न is understood in the sense of a jewel; but if it is understood in the sense: 'जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते,' then it would be अर्थान्तरन्यास. Cf. N: अत्र सर्वप्रार्थनीयरत्नकर्तृकान्वेषणप्रतिषेधेन तत्सदृशं देवीकर्तृकवरप्रार्थनं प्रतीयते इति सादृश्यात् अप्रस्तुतप्रशंसा इयम् । रत्नशब्दस्य स्वजातिश्रेष्ठवाचित्वे पुनः अर्थान्तरन्यासः। This verse is given as an instance of माधुर्य in the अलङ्कारसूत्र.

46. Read: सोष्मणा निःश्वसितेन निवेदितम्, मे मनः तु संशयम् एव गाहते, ते प्रार्थयितव्यः एव न दृश्यते, प्रार्थितदुर्लभः कथं भविष्यति.

**निःश्वसितेन** by the sigh. **सोष्मणा** which is hot. The idea is that the hot sighs have revealed to the Brahmacharin that she longs for a husband and not heaven. But the Brahmacharin wants her to say it by words of mouth and hence

he says further मन:— तु गाहते The word indicates that he thinks differently however. He says that anybody might think that she was practising penance to secure a good husband; but he does not see any cogent reason and hence his doubt. **प्रार्थयितव्य** One who is fit to be sought for. **प्रार्थितदुर्लभः** प्रार्थितश्चासौ दुर्लभश्च. Difficult to get even though sought for. Cf. N: सर्वप्रार्थनीयया त्वया प्रार्थयितव्यः कश्चित् पुरुषः लोकत्रये न उपलभ्यते। अपि च यदि कदाचित् कश्चित् त्वया प्रार्थितो भवेत्, तर्हि तस्य भाग्यातिशयः एव तत्र हेतुः इति कुतः तस्य प्रार्थितदुर्लभत्वम्। ततो न तदर्थं तव तपश्चरणोपपत्तिरिति भावः॥

47. Read: अहो तव ईप्सितः कः अपि युवा स्थिरः यः चिराय कर्णोत्पल—शून्यतां गते कपोलदेशे कलमाग्रपिङ्गलाः श्लथलम्बिनीः जटाः उपेक्षते.

**अहो** Oh, wonderful. 'अहो हीति च विस्मये' Amara. **स्थिरः** कठिणः hard-hearted. जडः (dull) इत्यर्थः N. **कर्णोत्पलशून्यतां** accusative to गते. Where there is no ear-lotus. **उपेक्षते......** disregards, disrespects, is indifferent to. **श्लथलम्बिनीः** loosely hanging. श्लथाः शिथिलबन्धनाः अत एव लम्बिन्य M. अत्र विरहपीडया केशेष्वनादरः श्लथबन्धत्वे हेतुः। **कलमाग्रपिङ्गलाः** कलमाग्रं शालिशूकं तद्वत् पिङ्गला रक्तवर्णाः reddish like the tips of the Kalama rice. **कलम** is a kind of rice which ripens in sixty days. 'शालयः कलमाद्याश्च षष्टिकाद्याश्च' (षष्टिकाः षष्टिरात्रेण पच्यन्ते) Amara. The idea is that the young man who is yearned for by you must be hard-hearted or dull as he disrespects your hair; which are loosely hanging on your cheeks and are not tied. They look reddish by being neglected. N rightly remarks: 'किमिव हि मधुराणां मण्डनं नाकृतीनामि' ति न्यायेन मण्डनान्तरत्वेनैव पर्यवसिता इत्याह। But the youth is cruel. There might be a suggestion in the word स्थिर, which is an epithet of Shiva.

48. Read: मुनिव्रतैः अतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् दिवा शशाङ्कलेखाम् इव त्वां पश्यतः सचेतसः कस्य मनः न दूयते.

**मुनिव्रतैः** by vows of ascetics. चान्द्रायणादिभिः M. **अतिमात्रकर्शिताम्** अत्यर्थं कर्षितां कृषत्वं प्रापिताम्। Very much emaciated. **दिवा...स्पदाम्** दिवाकरेण आदित्येन आप्लुष्टानि दग्धप्रायाणि विभूषणास्पदानि विभूषणानां कटकाङ्गदाद्याभरणानाम् स्थानानी यस्याः Formerly the

places of these ornaments were in some way saved from heat or wind by the ornaments; but now being exposed they are as good as burnt. The expression may be taken with शशाङ्कलेखा too, where आस्पद means function, use. **लेखा**=रेखा, crescent. **सचेतस**: alive; sympathetic. Cf. N. स्वाधीनानुग्रहः त्वदीप्सितः पुरुषः पुनः अखिलजगत्प्रार्थनीयां त्वां आत्मप्रार्थनमात्रेण एतादृशीं पश्यन् अपि उपेक्षते इति यत्, तदचेतनत्वप्रयुक्तं एव अस्य पाषाणादिप्रख्यत्वं इति भावः.

49. Read: तव प्रियं सौभाग्यमदेन वञ्चितम् अवैमि यः चतुरावलोकिनः अरालपक्ष्मणः अस्य चक्षुषः आत्मीयं वक्त्रं चिरं लक्ष्यं न करोति.

**अवैमि** I know. **सौभाग्यमदः** pride of good luck or beauty. 'मदीयस्य सौभाग्यस्य लोकोत्तरत्वात् इयं सर्वथापि मामेवभिसरिष्यति इति अभिमानेन' N. **चतुरावलोकिनः** 'goodlooking'; seeing in a graceful or beautiful manner. चतुरं सुन्दरम् यथा भवति तथा अवलोकितुं शीलं अस्य N. **लक्ष्यं** aim. A, N read लक्ष्यं रविमस्य etc. i.e. 'He makes the sun, the aim of the eyes'. The reading is decidedly inferior. **अस्य** this i.e. yours. **अरालपक्ष्मणः** अरालं कुटिलं पक्ष्म यस्य which has curved eyelashes. 'अरालं वृजिनं जिह्मम्' Amara. The idea is that the man who is priding too much in his beauty is deceiving himself in that he is not making his self the aim of these beautiful eyes of your.

50. Read: हे गौरि कियत् चिरं श्राम्यसि, मम अपि पूर्वाश्रमसंचितं तपः विद्यते, तदर्धभागेन काङ्क्षितं लभस्व, तं वरं च साधु वेदितुम् इच्छामि.

**श्राम्यसि** तपः करोषि N. See the word श्रम (verse 45). **पूर्वाश्रमसञ्चितं** पूर्वाश्रमे प्रथमाश्रमे ब्रह्मचर्ये सञ्चितम्. The बटु says that he has some austerities to his credit and he would fain give them, if she were to get her desired husband. He is prepared to give her a half. But he wants to know who he is. This is explained differently in addition by Narayana to avoid the meaning ब्रह्मचर्य; for the question would arise, 'when had he finished his ब्रह्मचर्य stage?' We are all along told that he was a वर्णी, a बटु and so on: पूर्वं जगत्सर्गादौ अश्रमेण

अनायासेन मायामात्रेण इत्यर्थः। सञ्चितं सम्पादितं तपः शरीरं तस्यार्धभागेन &tc. This verse finishes Shiva's first speech to Parvati.

51. Read: इति द्विजन्मना प्रविश्य अभिहिता सा मनोरथं शंसितुं न शशाक, अथो परिपार्श्ववर्तिनीं वयस्यां विवर्तितानञ्जननेत्रम् ऐक्षत.

**प्रविश्य** having entered; i.e. into her thoughts. **द्विजन्मना** ब्राह्मणेन. Cf. N ' मातुरग्रेऽभिजायन्ते द्वितीयं मौञ्जिबन्धनात् ' ( याज्ञवल्क्य I. 39). He further quotes: यस्य यस्य हि यो भावः तेन तेन च तं नरम्। अनुप्रविश्य मेधावी क्षिप्रं आत्मवशं नयेत्॥ **शशाक** She could not declare it; because of her bashfulness. **अथो** ( अथ+उ ); Then afterwards. **परिपार्श्ववर्तिनीम्** standing near; at her elbow; at her beck and call. अत्र ताच्छील्यार्थेन प्रत्ययेन सर्वदा समीपवर्तनमुक्तम् N. **विवर्तितानञ्जननेत्रम्** विवर्तिते परावर्तिते आदौ विरहपीडया पश्चात् तपश्चरणेन चाञ्जनरहिते नेत्रे यथा तथा by turning her eyes which were devoid of collyrium अनञ्जनशब्देन अत्र पीडाधिक्यप्रतिपादनद्वारेण सर्वा अपि मत्पीडा वक्तव्या इत्यर्थो ध्वन्यते N.

52. Read: तदीया सखी तं वर्णिनं उवाच, ' हे साधो तव कुतूहलं चेत निबोध यदर्थम् एतया अम्भोजम् उष्णवारणम् इव वपुः तपःसाधनम् कृतम्.

**वर्णिनम्** To the Brahmacharin. वर्णः स्तुतिः अस्य अस्ति इति। ' वर्णाद्ब्रह्मचारिणि ' इति इनिः। ' वर्गी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि ' इति विश्वमेदिन्यौ. V.L. वाञ्छितम्. **साधो** समचित्त N. Oh man of a balanced mind, oh gentleman; न हि साधुषु किञ्चिदपि अकथनीयमस्ति इति भावः N. A साधु should not be deceived and therefore if you have curiosity to know, hear. **यदर्थम्** why; for which reason. **अम्भोज .........वारणम्** अम्भोजम् तामरसम्। उष्णवारणम् आतपत्रम् इव यथा दर्शनावघ्राणादिभिः उपभोक्तव्यं अत्यन्त— पेलवं अम्भोरुहं आतपत्रत्वेन विधीयते तथा एव इदम् N. As as delicate lotus, fit to be enjoyed by seeing or smelling it, may be used as an umbrella, so she is using her delicate body as a medium, or means for penance.

53. Read: अधिश्रियः चतुर्दिगीशान् महेन्द्रप्रभृतीनवमत्य इयं मानिनी मदनस्य निग्रहात् अरूपहार्यं पिनाकपाणिं पतिं आप्तुं इच्छति.

**महेन्द्रप्रभृतीन्......**महेन्द्र and others. **अधिश्रियः** अधिगता प्राप्ता श्रीः ऐश्वर्यम् यैः तान् who have secured glory,

or wealth before. **चतुर्दिगीशान्** the lords of the four quarters. चतसृणां दिशां ईशान् ( पूर्वादीनां क्रमेण ) इन्द्रयमवरुणकुबेरान्. Cf. इन्द्रो वह्निः पितृपतिः नैऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥ **अवमत्य** diregarding; in spite of. **मानिनी** the proud woman. V.L. भामिनी. **अरूपहार्यं** रूपेण सौन्दर्येण हार्यः हर्तुं वशीकर्तुं शक्यः रूपहार्यः । रूपहार्यः न भवति इति अरूपहार्यः। Who could not be led away or attracted by beauty. (Parvati could infer this from the blow dealt by Shiva to Madana). **निग्रहात्** हननात destruction, annihilation. **पिनाकपाणिम्** The holder of Pinaka. 'पिनाकोऽजगवं धनुः' Amara. पिनाक इति हरधनुषो नाम N. It also means a trident. **पतिमाप्तुम् इच्छति** On this N remarks वीरकामिन्यो हि नितम्बिन्यः 'Women love heroes or warriors'. Parvati saw that Shiva was the only person who was not led away by beauty; (perhaps he was a safe husband). And he had valiantly put down Kama, a very difficult task to attempt. So he was the only worthy husband worth striving for. But he could not be secured by beauty. She therefore took the next and the only alternative of *Tapas*. She did not care as much for wealth as she cared for heroism. That is why she disregarded the lords of the four quarters even, when they were अधिश्रियः.

54. Read: पुरा असह्यहुंकारनिवर्तितः पुरारिम् अप्राप्तमुखः शिलीमुखः विशीर्णमूर्तेः अपि पुष्पधन्वनः इमां हृदि व्यायतपातम् अक्षिणोत.

**असह्य ..निवर्तित** असह्येन सोढुमशक्येन हुंकारेण कोपोद्रेकजनितेन शब्दविशेषेण निवर्तितः The arrow was made to return by the defiance of the angry Shiva. The defiance was too much for Kama. The arrow must go forth omewhere. So it found an easy target in Parvati. If not Shiva then Parvati! What could Madana do; he could not take back his arrow. **पुरारिम्** The enemy of the (three) cities. The story is: Taraka's three sons, ताराक्ष, कमलाक्ष and विद्युन्मालिन् secured a boon from Brahmadeva after very severe penance that they would be able to build three cities which could be destroyed by a single arrow only.

So a golden, a silver and an iron city were built in heaven, the middle regions and the earth. The demons grew powerful and, as usual, grew tyrannous and defeated even the gods. Shiva had to go to their aid in a special vehicle. The story is alluded to here before Taraka's destruction. This is therefore an anachronism. For details the student can see Mbh, कर्णपर्व 24-27. It may be marked that the reading स्मरारि may absolve the poet from this charge of anachronism. The words are used evidently for jingling: पुरा पुरारिम् etc. **अप्राप्तमुख;** अप्राप्तं मुखं अग्रं यस्य तथाभूतः सन् N or अप्राप्तफलः M. not reaching its aim. **शिलीमुख:** an arrow. 'अलिबाणौ शिलीमुखौ ' Amara ( शिली शल्यं मुखे यस्य). **इमां**=पार्वतीम्. **व्यायतपातम्** सुदूरावगाढः M. causing a very deep wound. व्यायतः विशेषेण आयतः, दीर्घः पातः पतनं यथा भवति तथा । दुर्बलेषु के नाम न प्रगल्भन्ते इति भाव; This is a fine example of प्रत्यनीक.

55. Read: तदा प्रभृति उन्मदना ललाटिकाचन्दनधूसरालका बाला पितुः गृहे तुषारसंघातशिलातलेषु अपि निर्वृतिं न जातु लभते स्म.

**उन्मदना।** उत्कटमन्मथा excited by love. मदनशब्दः मदनवेदनां लक्षयति. तद प्रभृति From that time onwards, that is, from the fall of the arrow. **पितुर्गृहे** शीतलेषु अपि हिमवत्प्रदेशेषु. So all the region was extremely cool. **ललाटिका...लका** ललाटिका the तिलक on the forehead. कर्णललाटात् कन् अलंकारे [ ४।३।६५ ] इति कन् । स्त्रियां टाप् । 'प्रत्यवस्थादि-' इत्यादिना आकारस्य इकारादेशः। तस्य चन्दनं तेन धूसराणि अलकानि यस्याः Whose curls became grey with the sandal-paste, applied as a mark on the forehead. **जातु** कदाचित् Sometimes **न जातु** never. **निर्वृतिम्** ease. **तुषार......तलेषु** अपि That shows the very high degree of her torment; even on the slabs of cool snow, she would not feel at ease. तलेषु would show according to N that she could move from slab to slab if one of them on which she rested became hot. On ललाटिका Dakshinavarta observes that it shows her maidenhood as the word तिलक indicates married state: अनेन अनूढात्वमुक्तम् । ऊढानां तु तिलकमलङ्कारः । वक्ष्यति च विवाहदीक्षातिलकं चकार (VII. 24). This

is faulty. The ललाटिका is a mere mark, and not अलङ्कार. This verse shows her मदनव्याधि.

56. Read: पिनाकिनः चरिते उपात्तवर्णे (सति) इयम् अनेकशः वनान्तसंगीतसखीः किंनरराजकन्यकाः सबाष्पकण्ठस्खलितैः पदैः अरोदयत्.

**उपात्तवर्णे** उपात्तो वर्णः गीतिक्रमः यस्मिन्. वर्णः शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते । गीतिक्रमे स्तुतौ वेषे वर्णशब्दः स्मृतो बुधैः ॥ Halayudha. **सबाष्पकण्ठस्खलितैः** faltering by the throat being choked by tears. 'बाष्पः कण्ठाद्याश्रयो दुःखवेगः' इति भोजः । **पदैः** words. पदमात्रं अपि न प्रसरति किमु पुनः गीतिक्रमः N. **किंनरराजकन्यकाः** the daughters of the king of किंनरs. किन्नराणां स्वरमाधुर्याधिक्यात् किंनरपदोपादानम् । The Kinnaras have a face of a horse and trunk of men. They are the singers of heaven and stay in Kubera's world on the Himalayas. They are, according to Pauranic accounts, born from the thumb of Brahman. They are also called काश्यपपुत्र s. They are otherwise called अश्वमुख, तुरंगवक्त्र or मयु, अश्वमुखत्वात् कुत्सिताः नराः । 'किं क्षेपे' (२।१।६४) इति समासः । **वनान्त...सखीः** वनान्ते संगीतेन निमित्तेन सखीः her friends in singing on the borders of the forest. **अरोदयत्** caused them to weep. हरचरितगानजनितमदनवेदनां एनां वीक्ष्य किंनर्योऽपि रुरुदुः इति भावः. Here there is मूर्च्छाप्रादुर्भाव according to मल्लिनाथ shown by the word सना...तै... In the द्वादशावस्था scheme of love this would denote the प्रलापावस्था. 'प्रलापः गुणकीर्तनम्' इति आलंकारिकाः M.

57. Read: त्रिभागशेषासु निशासु च क्षणं नेत्रे निमील्य सहसा (हे) नीलकण्ठ, क्व व्रजसि इति अलक्ष्यवाक् असत्यकण्ठार्पितबाहुबन्धना व्यबुध्यत.

**त्रिभागशेषासु** तृतीयो भागः त्रिभागः, तृतीयो भागः शेषः अवशिष्टः यासु तादृशीषु । अनेन तत्पर्यन्तं निद्रालेशस्यापि अभावः सूचितः N. When a third part of night was yet remaining. The night is called त्रियामा. She would be awake for the first two याम s or watches (periods of three hours) and in the *third* part of night would just close her eyes. **निशासु** the plural shows that she spent many such nights. **क्षणं** just for a moment. This shows स्वप्नावसर. **सहसा** all of a sudden. 'अतार्किते तु सहसा'

Amara. **व्यबुध्यत** got up. **नीलकण्ठ** The epithet is very expressive and rightly as Prof. Karmarkar observes: 'Parvati had experienced **कण्ठग्राह** by Shiva and hence the epithet was uppermost in her mind' (Notes P. 248). **अलक्ष्य-वाक्** Cf. N: लक्षशब्दश्चात्र यमुद्दिश्य वचसः प्रवृत्तिः तम् लक्षयति । अलक्षा लक्षेण रहिता वाग् यस्याः सा तथोक्ता । The words referred to no apparent person. **असत्य...बन्धना** असत्ये अपरमार्थे सदसद्विलक्षणे कण्ठे । N. very critically remarks: शुक्तिरजतादिषु मिथ्याज्ञानेषु सदसद्विलक्षणं रजतादिकं विषयः इति अद्वैतवादिनां मतं, तदनुसारेण इयम् उक्तिः । अन्यथा पुनः अलक्ष्यवाक् इतिवद् अकण्ठार्पितबाहुबन्धना इति एवं प्रयोगः स्यात्. She had thrown her arms round the neck which was unreal, imaginary, inexistent.

This verse shows the condition of जागर and उन्माद.

The साहित्यदर्पण refers to this verse also as a instance of प्रलाप.

58. Read: त्वं बुधैः सदा सर्वगतः उच्यसे, भावस्थम् इमं जनं कथं न वेत्सि इति मुग्धया स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि उपालभ्यत च.

**यदा** A, N read सदा. **सर्वगतः** all-pervading. देशतः परिच्छिन्नत्वं निरस्तम् N. If we read सदा it would show that he was कालतः अपरिच्छिन्नः. **बुधैः** by wise persons. अनेन तद्वचनस्य वेदमूलत्वात् अन्यथात्वशङ्कां निवर्तयति N. They are of equal weight with the Vedas in point of testimony and therefore their words ought to be true. **त्वम्** Parvati should not have used the singular. It is explained as: चित्रनिवेशिते भगवति उन्मादावस्थया प्रत्यक्षभ्रमेण अत्र त्वंपदप्रयोगपूर्वकः व्यवहारः । ' अप्रेक्षाकारितोन्मादः ' द. रू. IV. 30. **भावस्थम्** भावोऽभिलाषः तत्र तिष्ठतीति । ' सुपि स्थः ' (३।२।४) इति कः Devoted to you; yearning or longing for you. Really saying when Shiva is described as सर्वगत he ought to know everything. देशकालाभ्यामनवच्छिन्नस्य तव मदभिलाषाज्ञानादुपेक्षणमिति वक्तुं न युक्तम् । तस्मात् निर्दयत्वादेवोपेक्षणमिति भावः N. The only conclusion then is that चन्द्रशेखर is pitiless. **स्वहस्तोल्लिखितः** drawn by her own hands; painted, portrayed. This would show that she was an accomplished

girl. Among the sixtyfour arts आलेख्य is included. For the list see कामशास्त्र Benares edition or साहित्यदर्पण (Nirnayasagara Press). **मुग्धया** मोहमुपगतया. मोह is: विचित्तता भीतिदुःखावेशानुचिन्तनैः । तत्र ज्ञानभ्रमाघातघूर्णनादर्शनादयः ॥ द. रू. IV. 26. She had been intoxicated with love and hence the word. Illusion of attachment or love. **रहसि** in private; to one another. 'मिथोऽन्योन्यं रहस्यपि.' Amara. The difficulty of the female friends of Parvati knowing her secret conversation has led M to make the following remark: यद्यपि रहसि इति उक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव, whereas A says: रहसीति अस्मास्वदृश्यमानासु पश्यन्तीषु and N says: अस्माभिरपि इयमवस्था निगूढतरमेव दृष्टा. What is meant is that the female friends saw this condition of their सखी unobserved. **उपालभ्यत** was taunted, was censured, was found fault with. 'यः सनिन्द उपालम्भः' Amara. **चन्द्रशेखर**: चन्द्रः शेखरः शिरोऽलङ्कारः यस्य To whom the moon was an ornament for the head. The student should note that the verse depicts what is technically called स्वप्रसंदर्शनावस्था of a विरहिणी. Here उन्माद is seen prominently, though other भावs are also pointed out by suggestion. The full description of उन्माद is अपेक्षाकारितोन्मादः सन्निपातग्रहादिभिः । अस्मिन्नवस्था रुदितगीतहास—आसितादयः ॥ IV. 30.

59. Read: यदा च विचिन्वती इयं तस्य जगत्पतेः अधिगमे अन्यं विधिं न अपश्यत् तदा गुरोः अनुज्ञया अस्माभिः सह तपसे तपोवनं प्राप्ता.

**अधिगमे** getting, acquisition; securing. **विधिम्** rite **विचिन्वती** अन्वेषणं कुर्वती searching. **गुरोः** of the father. **प्रपन्ना** came, reached. The word अनुज्ञया shows her विमृश्यकारित्व. When Parvati saw that there was no other way to secure lord Shiva except penance, she took her father's permission and came to this forest to practise penance. See Verse 7 above.

60. Read: सख्या स्वयं कृतजन्मसु तपःसाक्षिषु एषु द्रुमेषु अपि फलम् दृष्टम्, अस्याः शशिमौलिसंश्रयः मनोरथः प्ररोहाभिमुखः अपि न च दृश्यते.

**सख्या** पार्वत्या as her female friend is speaking. **कृतजन्मसु** कृतं जन्म येषाम् who were given birth to i.e. planted.

